द्वितीयार्थत्वे पाकानुपधायकतद्विषयककृत्युत्तरकाले पाकं चकारे-त्यादिप्रयोगवारणाय साध्यताख्यविषयताया एव तदर्थत्वावश्यकत्वादिति—वाच्यम्; तथा सति 'पाकं करोति', 'यागं करोति' 'घटं करोति' इत्यादिवाक्येष्वतिव्याप्तेः। उक्तरीत्या तत्रापि कृतिसाध्यताबोधकत्वसत्त्वात् ॥ —इति चेत् ॥

**मैवम्** ॥ अयमेतदकरणे प्रत्यवायभाग्भवेदित्याकारकेच्छारूपा भगवदाज्ञा पुरुषान्तराज्ञा वा तदुभयं प्रत्यवायप्रयोजकीभूताभावप्रतियोगिप्रवृत्तिविषयकाप्ताज्ञात्वेनानुगमय्य तादृशाप्ताज्ञाबोधकवाक्यत्वमेव विधिलक्षणम्। 'अहरहस्सन्ध्यामुपासीत' इत्यादौ निरुक्तेच्छारूपभगवदाज्ञा लिङर्थः। 'कर्ता चाख्यातार्थः' इति निरुक्ताज्ञाविषयसन्ध्योपासनकर्ता ब्राह्मण इति बोधः। तादृशबोधानन्तरं च निरुक्ताज्ञाविषयत्वेन हेतुना प्रत्यवायप्रयोजकीभूतस्वानुकूलकृतिमत्त्वसम्बन्धावच्छिन्नाभावप्रतियोगित्वस्य सन्ध्यावन्दनादावनुमित्या तत्र प्रवृत्त्युपपत्तिः। कृतिसाध्यताज्ञानस्येव प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वज्ञानस्यापि अन्वयव्यतिरेकाभ्यां प्रवृत्तौ हेतुत्वात्। धात्वर्थोपासनस्याख्यातार्थकर्त्रैकदेशकृतौ साध्यतासम्बन्धेनान्वयेन कृतिसाध्यताया अपि सन्ध्यावन्दने भानात्। कृतिसाध्यत्वप्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वयोः ज्ञानेऽपि बलवदनिष्टानुबन्धित्वज्ञाने प्रवृत्त्यनुदयात् तज्ज्ञानस्याप्यपेक्षितत्वे तु निरुक्ताज्ञाविषयत्वेन बलवदनिष्टाननुबन्धित्वस्यापि अनुमानं बोध्यम् ॥

न च—निरुक्ताज्ञाविषयत्वे लिङश्शक्तिं कल्पयित्वा तेन प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वबलवदनिष्टाननुबन्धित्वयोरनुमानाङ्गीकारापेक्षया तयोरेव लिङश्शक्तिकल्पनमुचितम्; आक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यतायाश्श्रीभाष्यसिद्धत्वादिति—वाच्यम्। उभयार्थेऽपि शक्तिसद्भावस्थले हि तन्न्यायस्य प्रवृत्तिः, लिङादेस्तु

निरुक्ताज्ञार्थकत्वमेव ॥ विधिनिमन्त्रणामन्त्रणाभीष्टसम्प्रश्नप्रार्थनेषु लिङ्, लोट् च, लिङर्थे छन्दसि लेट्—इत्यादिपाणिन्यनुशासनेन सिद्धम् । तत्र विधिः प्रेरणमिति वैयाकरणैर्व्याख्यातत्वात् । प्रेरणं हि शासनमेव ॥

उक्तं च **भट्टपराशरपादैः**—"त्रयी वृद्धास्तत्तद्विधिरपि भवत्प्रेरणम्" इति । "रक्षाकूतनिवेदनश्रुतिरसौ त्वन्नित्यशास्तिस्ततः" —इति ॥

**श्रीभाष्येऽप्यभिहितं**—'स्वशासनावबोधि शास्त्रं प्रदिश्य'—इति ।

उक्तं च **नारायणाचार्यैः** ॥

"आप्तस्य हितकामस्य नियोगं केचिदूचिरे ।
भाष्यकारोऽपि भगवानेतमेवान्वमन्यत ॥" —इति ॥

**द्रमिडभाष्येऽप्युक्तं**—"स्वशासनानुवर्तिनो ज्ञात्वा"—इति ॥

शास्त्रसिद्धं चेदं—

श्रुतिस्स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥"

—इति वचनात् ॥

प्रपञ्चितं चैतत् **गीतायां**—

"ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धिनष्टानचेतसः ॥"

—इति स्वाज्ञानुवर्तिनां प्रशंसां तद्विपरीतानां च निन्दां च कृत्वा, स्वाज्ञानुपालनमकुर्वतामासुरप्रकृत्यन्तर्भावपूर्वकमधर्मगत्यभिधानात् ।

सूचितं **चैतज्जैमिनिना**—"चोदनालक्षणोऽर्थो धर्मः" इति । आज्ञाविषयो धर्म इत्यर्थः, चोदनाशब्दस्याज्ञापरत्वात् ॥

उक्तं च **शाबरभाष्ये**—

"आचार्यचोदितः करोमीति हि दृश्यते" —इति ॥

किं च– नित्यनैमित्तिककर्मविधायकशास्त्रगतलिङादेर्निरुक्ताज्ञार्थकत्वाभावे तयोराज्ञाविषयत्वासिद्ध्या तदकरणस्य प्रत्यवायजनकत्वानुपपत्तिः, तदाज्ञाविषयाकरणस्यैव तन्निग्रहजनकताया लोकसिद्धत्वात् । नित्यकर्माभावत्वेन नैमित्तिककर्माभावत्वेन च प्रत्यवायं प्रत्यपूर्वतया हेतुत्वकल्पने च गौरवम् । प्रत्यवायस्य भगवन्निग्रहरूपत्वं च श्रीभाष्यादिषु स्थापितम् । एवं यस्तु राजाज्ञायां सत्यामपि तामज्ञात्वा स्वत एव पाकादाविष्टसाधनत्वादिबुद्ध्या प्रवृत्तस्तस्य पाके वर्तमानतादशायां चैत्रः पचेदिति प्रयोगस्यापत्तिः । यस्तु ज्योतिष्टोमादिकं तपसा साक्षात्कृत्य प्रवृत्तः, ज्योतिष्टोमेन स्वर्गकामो यजेतेति शास्त्रस्य तद्विषयत्वेऽपि प्रामाण्यापत्तिश्च । न चेष्टापत्तिः । यस्तु विधिवाक्यादेव प्रवर्तते तद्विषयत्व एव विधेः प्रामाण्यमिति सिद्धान्तात्, तदीयपाकादावपि राजादिनिग्रहरूपप्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वस्याबाधात् । ज्योतिष्टोमादीनां साक्षात्कारश्च 'स एतान्मरुत्वतीयानात्मस्मरणानपश्यत्तानगृह्णीत" इत्यादिश्रुतिसिद्धः । अस्मिन्मते च लिङर्थाज्ञाया विषयत्वप्रयोज्यत्वोभयसम्बन्धेन धात्वर्थेऽन्वयाङ्गीकारादुक्तस्थले पाकादिक्रियायामाज्ञाप्रयोज्यत्वस्य बाधादप्रामाण्योपपत्तेः ॥

**ननु**--प्रत्यवायप्रयोजकीभूताभावप्रतियोगिप्रवृत्तिविषयकनिरुक्ताज्ञाबोधकवाक्यत्वस्य विधिलक्षणत्वे काम्यविधावव्याप्तिः ; तत्रायमत्र प्रवर्ततामित्याकारकानुज्ञाया एव लिङाद्यर्थत्वात्, तादृशानुज्ञाविषयत्वेनेष्टसाधनत्वाद्यनुमित्या तत्र प्रवृत्तेरिष्टत्वात् । एवं श्येनेनाभिचरन् यजेतेति विधिवाक्येऽप्यव्याप्तिः, शत्रुमरणे प्रवृत्तानामधिकारिणां निषिद्धोपायान्तरप्रवृत्तौ महान् प्रत्यवायः; अभिचारप्रवृत्तौ

अल्पीयानेव ; तत्र प्रवृत्तानां फलप्राप्तौ शास्त्रप्रामाण्यनिश्चयेन तेषामपि शास्त्रवश्यता स्यादित्यभिप्रायेण तादृशविधेः प्रवृत्तत्वात् ; अयं पापः प्रसक्तश्चेदत्र प्रवर्ततामित्याकारकपापकर्मप्रसक्तिकालीनप्रवृत्तिविषयकाभिप्रायस्याज्ञानुज्ञाबहिर्भूतस्य तत्र लिङर्थत्वात्, निरुक्ताज्ञाद्यर्थकत्वाभावात्—इति चेन्न । निरुक्ताज्ञानुज्ञाभिप्रायान् प्रवृत्तिप्रयोजनाप्ताभिप्रायत्वेन अनुगमय्य तद्बोधकवाक्यत्वस्य विधिलक्षणत्वाङ्गीकारात् ॥

तदेतदभिप्रेत्यैव **भट्टपराशरपादैः** प्रतिपादितम्—

"आज्ञा ते सनिमित्तनित्यविधयः, स्वर्गादिकाम्याद्विधि-
स्सानुज्ञा, शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः ।
सर्वा यस्य समस्तशासितुरहो श्रीरङ्गसर्वस्व ते
रक्षाकूतनिवेदनी श्रुतिरसौ त्वन्नित्यशास्तिस्ततः ॥"—इति ॥

**न्यायपरिशुद्धावप्युक्तं—निगमान्तदेशिकैः**—

"नित्यनैमित्तिकादिविधिभेदेषु प्रशासितुरभिप्रायविशेषाः ॥"
—इति ॥

**ननु**—लिङादेराप्ताभिप्रायार्थकत्वं न भाष्यकारानुमतं ; वेदार्थसङ्ग्रहे लिङादेः कोऽर्थः परिगृहीत इति प्रश्नपूर्वकं यजदेवपूजायामिति देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयोऽभिदधतीति न किञ्चिदनुपपन्नम् । कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसम्बन्धप्रकारो हि वाच्यः, भूतवर्तमानतामन्ये वदन्ति, लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्तीति प्रतिपादनात् ; **श्रीभाष्येऽप्याद्यसूत्रे**—

"अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यत्वं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यध्यवसीयते"—

इत्यभिधानात्। तथा च कृतिसाध्यत्वमेव लिङर्थः—इति चेन्न। कृतिसाध्यत्वस्य लिङाद्यर्थकत्वेऽपि स्वशासनावबोधिशास्त्रं प्रदिश्येति भाष्यान्तरविरोधस्यानुशासनादिविरोधस्य च दुर्वारत्वात्। न हि विधिनिमन्त्रणेत्यादिसूत्रे विधिशब्दस्य कृतिसाध्यत्वार्थकत्वं सम्भवति, निमन्त्रणादिरूपवक्त्रभिप्रायसाहचर्येण विधिशब्दस्याप्याप्ताभिप्रायविशेषपरताया एव स्वारसिकत्वात्। अत आप्ताभिप्रायविषयीभूता या कृतिः तत्साध्यत्वमेव लिङर्थ इति भाष्यद्वयैककण्ठ्यम्॥ निरुक्ताज्ञादिविषयत्वस्य पुरुषादिसाधारण्येन तत्र प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वेष्टसाधनत्वादीनामभावेन व्यभिचारात्तस्य तदनुमापकत्वायोगेन तादृशाभिप्रायविषयीभूतकृतिसाध्यत्वस्यैव लिङाद्यर्थत्वावश्यकत्वात्। केवलकृतिसाध्यत्वस्य चैत्यवन्दनादिरूपनिष्फलकर्मसाधारण्येन तत्र प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वाभावेन व्यभिचारेण कृतावाज्ञाविषयत्वविशेषणस्यावश्यकत्वाच्च। स्पष्टं चैतदभिहितं कर्त्रधिकरणे भाष्ये—

> "शास्त्राणि हि—यजेत स्वर्गकामः, मुमुक्षुर्ब्रह्मोपासीतेत्येवमादीनि—स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते; न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते शासनाच्छास्त्रम्॥"—इति॥

कर्तृत्वे नियुञ्जते—कर्तृत्वविषयकं शासनं बोधयन्तीत्यर्थः। आज्ञाविषयीभूतकृतिसाध्यत्वस्य विध्यर्थत्वेन कृतिविषयकशासनबोधकत्वं शास्त्रस्येति भावः॥

यद्यप्युक्तभाष्यात् लकारार्थकर्तृघटककृतावेवाज्ञाविषयत्वं प्रतीयते, न तु कृतिसाध्यत्वरूपलिङर्थघटककृताविति, नाज्ञाविषयीभूतकृतिसाध्यत्वार्थकत्वं लिङो लभ्यते। तथाऽपि लकारार्थघटककृतेर्लिङर्थघटककृतेश्चाभेदात्तथोक्तमिति बोध्यम्॥

**वस्तुतस्तु**—कर्तृत्वे नियुङ्क्त इति भाष्यस्वारस्यादाप्ताभिप्राय एव विध्यर्थः। तस्याख्यातार्थघटककृतावेवान्वयः; न तु तद्विषयककृतिसाध्यत्वपर्यन्तं तदर्थः, गौरवात्। 'श्रुतिस्स्मृतिर्ममैवाज्ञा यस्ताम्' इत्यादिशास्त्रस्य विधिनिमन्त्रणेत्याद्यनुशासनस्य च स्वारस्यभङ्गाच्च तादृशकृतावेव धात्वर्थसन्ध्यावन्दनादेस्साध्यत्वसम्बन्धेनान्वयेन तादृशकृतिसाध्यत्वस्य सन्ध्यावन्दनादौ तुल्यवित्तिवेद्यतया लाभादेव प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वानुमानात्प्रवृत्त्युपपत्तिः। लिङादेस्साध्यतासम्बन्धेन किञ्चिदन्वितकृत्यर्थकत्वादेव कर्तृव्यापारसाध्यतामभिदधतीत्यस्य नानुपपत्तिः। अन्विताभिधानस्य भाष्यादिसंमतत्वेन साध्यत्वांशेऽपि लिङ्शक्तेः। अत एव **वेदार्थसङ्ग्रहे**—

"कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसम्बन्धप्रकारो हि वाच्यः॥" —इति

संसर्गतया भासमानसाध्यत्वबोधकत्वमादायैव कृतिसाध्यताबोधकत्वमुपपादितम्। शासनस्य पदार्थत्वादेव स्वशासनाववोधीति भाष्यं स्वरसम्; तस्य पदार्थैकदेशत्वे तत्स्वारस्य हानेः। एवं—न कलञ्जं भक्षयेदित्यादौ धात्वर्थभक्षणस्य प्रतियोगितासम्बन्धेनाभावे तादृशाभावस्य चाख्यातार्थघटककृतौ तत्रैव लिङर्थभूतनिरुक्ताज्ञाविषयत्वस्य चान्वयात् कलञ्जभक्षणाभावसाध्यकनिरुक्ताज्ञाविषयीभूतकृतिमानिति बोधः। तथा च—निरुक्ताज्ञाविषयीभूतकृतिसाध्यत्वेन कलञ्जभक्षणाभावे प्रत्यवायप्रयोजकाभावप्रतियोगित्वानुमानात् कलञ्जभक्षणाभावाभावरूपकलञ्जभक्षणे प्रत्यवायप्रयोजकत्वलाभात् तत्र निवृत्त्युपपत्तिः। कलञ्जभक्षणाभावस्य च तद्विरोधितद्विषयकद्वेषादिरूपत्वात् कृतिसाध्यत्वस्य न बाध इति बोध्यम्॥

**यत्तु न्यायपरिशुद्धौ**—"यद्यपि परमतेऽप्युदयनोक्तान्यनिषेधानुपपत्तिः, तथाऽपि सा नास्मत्पक्षमवगाहते, कर्तव्यताया विधि-

लब्धत्वेन कर्तव्य इति नञोऽन्वयाविरोधात् कर्तृव्यापारसाध्यत्वमेव च वक्तव्यम् ''—इत्युक्तम्; तदप्याज्ञाविषयीभूतकृतिसाध्यत्वस्य लिङर्थत्वात्तदभावस्य कलञ्जभक्षणादौ न बाध इत्यर्थपरम्। अन्यथा केवलकृतिसाध्यत्वाभावस्य तत्र बाधात्। इदमपि परोक्तदूषण-निरासपरमेव, न तु स्वमते निषेधस्थले तथा बोधोपपादनपरं; तथा बोधस्याबाधेऽपि कलञ्जभक्षणादावनिष्टसाधनत्वाविषयकतया निवृत्ति-प्रयोजकत्वासम्भवात्। अस्मदुक्तबोधस्य च निवृत्तिप्रयोजकत्वमनु-पदमेवोपपादितम्॥

नन्वेवं—उक्तनिषेधशास्त्रे पूर्वोक्तविधिलक्षणातिव्याप्तिः। तत्राप्या-प्ताभिप्रायबोधकत्वसत्त्वात्। न च—अभावविशेष्यतानापन्नकृतिवि-शेषणतापन्नाप्ताभिप्रायबोधकत्वस्य विवक्षणान्नातिव्याप्तिरिति—वाच्यम्; तथा सति पाण्डित्यकामो जन्मतिथावामिषं परिहरेदेकादश्यामुप-वसेदित्याद्यभावविधावव्याप्तिः; तत्रामिषभोजनाभावभोजनसामान्याभा-वसाध्यककृतावेव लिङर्थाभिप्रायस्य विशेषणत्वात्, प्राणसञ्चाराभाव-रूपप्राणायामविधौ अविहितप्रयोजनशून्यव्यापारनिवृत्तिरूपशमादि-विधौ चाव्याप्तेश्च। नञर्थाभावविशेष्यतानापन्नत्वनिवेशेऽपि न निस्तारः, 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इत्यत्राव्याप्तेः, 'नातिरात्रे षोडशिनं गृह्णाति' इति विकल्पविधावव्याप्तेश्च, तत्र षोडशिग्रहणा-भावस्य अङ्गताबोधनात्—इति चेन्न। प्रवृत्तिप्रयोजकाप्ताभिप्रायबोध-कत्वस्य लक्षणत्वेनादोषात्, न कलञ्जं भक्षयेदित्यादिनिषेधस्य कलञ्जभक्षणे निवृत्तिप्रयोजकत्वेऽपि प्रवृत्तिप्रयोजकाभिप्रायबोधकत्वा-भावात्। न च—प्रत्यवायप्रयोजकीभूताभावप्रतियोगित्वज्ञानस्य प्रवृत्तिहेतुत्वान्निषेधस्याप्यभावे प्रवृत्तिप्रयोजकत्वं दुर्वारमिति—वाच्यम्। भावविशेष्यकतज्ज्ञानस्य प्रवृत्तिहेतुत्वेऽप्यभावविशेष्यकतज्ज्ञानस्य निवृत्तिहेतुत्वात्, पाण्डित्यकामो जन्मतिथावामिषं न भुञ्जीतेत्यभावविधौ

लिङः अयमत्र प्रवर्ततामित्यनुज्ञार्थकत्वेन तादृशानुज्ञाविषयकृतिसाध्यत्वेन तादृशाभावे इष्टसाधनत्वानुमानात् तत्र प्रवृत्तिप्रयोजकत्वोपपत्तेः। एवं 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादावप्यनुज्ञाया लिङर्थत्वेन तस्यापि प्रवृत्तिप्रयोजकत्वोपपत्तेः। तथा च—यत्र लिङः आज्ञार्थकत्वं तादृशाभावसाध्यककृतिबोधकवाक्यस्य 'न कलञ्जं भक्षयेत्'—इत्यादेः निवृत्तिप्रयोजकत्वान्निषेधत्वं, अनुज्ञार्थकलिङ्घटिताभावसाध्यककृतिबोधकवाक्यस्य चेष्टसाधनत्वानुमितिद्वारा प्रवृत्तिप्रयोजकत्वाद्विधित्वमिति विवेकः॥ न चैवमेकादश्यामुपवसेदित्यस्य निषेधत्वापत्तिरिति वाच्यम्; इष्टत्वात्॥

नन्वेवं—'न हिंस्यात्सर्वा भूतानि' इत्यत्र सर्वभूतहिंसासामान्याभावसाध्यककृतौ लिङा निरुक्ताज्ञाविषयत्वप्रतीत्या तादृशाज्ञाविषयीभूतकृतिसाध्यत्वेन तादृशहिंसासामान्याभावस्य प्रत्यवायप्रयोजकीभूताभाव प्रतियोगित्वानुमित्या हिंसासामान्ये निवृत्तिप्रसक्तौ यागीयाहिंसायां 'अग्नीषोमीयं पशुमालभेत' इति विहितायां प्रवृत्त्युपपत्तये नहिंस्यादित्यत्र धातोर्विहितहिंसातिरिक्तहिंसापरत्वावश्यकतया उक्तस्थले उत्सर्गापवादन्यायप्रवृत्तिरावश्यकी। तथा च—नहिंस्यादिति निषेधघटकहिंसिधातोर्बलवदनिष्टाजनकत्वे सति वेदनाजनकव्यापारे शक्तत्वाद्यागीयपश्वालम्भनस्य पशुवेदनाजनकस्यापि पशोर्बलवदिष्टरूपस्वर्गजनकत्वेन तदजनकत्वघटितहिंसाशब्दार्थत्वाभावात् वेदनाजनकेऽपि चिकित्सके हिंसकत्वव्यवहाराभावेन सत्यन्तस्य सार्थकत्वात् तादृशविधिनिषेधयोरविरोध इति श्रीभाष्ये समाधानवर्णनमसङ्गतम्, सर्वत्र विरुद्धविधिनिषेधस्थलेषु कॢप्तेन तादृशन्यायेनैव प्रकृतेऽपि समाधानसम्भवे समाधानान्तरान्वेषणस्यायुक्तत्वात्—इति चेन्न॥ अग्नीषोमीयं पशुमालभेतेत्यस्य यागविधायकत्वेन हिंसाविधायकत्वाभावात्, पूर्वतन्त्रे द्रव्यसंयोगाच्चोदना पशुसोमयोरिति द्वितीयाध्याय-

द्वितीयपादपञ्चमाधिकरणे तद्वाक्यस्य यागविधायकत्वसमर्थनात्, तस्मिन्नधिकरणे हि 'अग्नीषोमीयं पशुमालभेत' इति श्रूयते ॥

**तथा**—हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षस इत्यादीनि। तत्राग्नीषोमीयवाक्यं हृदयादिद्रव्यकावदानानुवादेन देवताविधायकं, उताग्निषोमीयपशुकरणकयागविधायकमिति संशये—तद्वाक्यं न यागविधायकं, तथा सति हृदयादिवाक्यानां द्रव्यसंस्कारविधिपरत्वं वक्तव्यं तच्च न युज्यते, यागीयद्रव्यस्य पशोरेव संस्कारावश्यकत्वेऽपि हृदयादिद्रव्यसंस्कारस्यानुपयोगात् । अतो हृदयादिद्रव्यकावदानानुवादेन देवताविधिपरमेवेदं वाक्यम् । तत्रावदानाक्षिप्तं स्पर्शनमालभतिनाऽनूद्यते, पशुशब्देन च लक्षणया पशुविकृतिद्रव्यत्वेन हृदयादिकमुच्यते; अग्नीषोमीयामिति च अग्निसोमदेवताकत्वं विधीयते, द्रव्यदेवतासमभिव्याहाराच्च यागाः कल्पनीयाः—इति **पूर्वपक्षं प्रापय्य**; अग्नीषोमीयवाक्ये पशुविशिष्टयाग एव विधीयते, पशोरेव हृदयादिद्रव्यद्वारेण यागे करणत्वेऽपि हृदयादीनामपि संस्कारस्य यागोपयुक्तत्वेन हृदयादिवाक्यानां संस्कारविधिपरत्वमिति—**सिद्धान्तितम्** ॥

एवं यागे—कृत्स्नः पशुरेकं हविः, उत हृदयादिहविरिति संशय्य हृदयादीनां हविष्ट्वमिति स्थापनपरे "पशोरेकहविष्ट्वं समस्तचोदितत्वात्" इति दाशमिकाधिकरणे, तथा येन केन चिदङ्गेन यागः कर्तव्यः, उत समस्तैरङ्गैः, अथवा हृदयादिभिरेकादशभिरिति संशय्य, हृदयाद्येकादशभिरिति स्थापनपरे तदुत्तराधिकरणे च तद्वाक्यस्य यागविधिपरत्वमुक्तम् । एवं चाङ्पूर्वकलभधातोर्यागे पशुमिति द्वितीयायाश्च करणत्वे लाक्षणिकत्वात् उत्सर्गापवादन्यायो न प्रवर्तते, व्याप्यधर्मावच्छिन्नविधिव्यापकधर्मावच्छिन्ननिषेधस्थल एव तत्प्रवृत्तेः ॥

न च—आङ्पूर्वकलभधातोर्हिंसापूर्वकत्वविशिष्टे यागे अजहत्स्वार्थलक्षणाङ्गीकारात् हिंसाया अपि विधेयत्वमुपपद्यत इति—वाच्यम्; तथा सत्यग्नीषोमीयपशुकर्मकत्वस्य धात्वर्थैकदेशहिंसायामन्वयासम्भवेन याग एव तत्करणत्वान्वयस्य वाच्यतया हिंसासामान्यस्यैव विधानापत्त्या विहितहिंसातिरिक्तहिंसाया एवाप्रसिद्ध्यापत्तेः, हिंसायामेव कथं चिदन्वयाभ्युपगमे चाग्नीषोमीयपशुकरणकयागस्यालाभापत्तेः, विशिष्टे लक्षणाया असम्भवात्। अत एव मीमांसकैरालभेतेत्यस्य केवलयागे जहत्स्वार्थलक्षणा स्वीकृता ॥

उक्तं च **भाट्टरहस्ये**—"धात्वर्थश्च क्वचिच्छक्यार्थ एव, भावनायां प्रकारो यथा यजेतेत्यादौ; क्वचित्तु लक्ष्यार्थः, यथा अग्नीषोमीयं पशुमालभेतेत्यादौ यागः। लक्ष्यार्थोऽपि क्वचिच्छक्यार्थयुक्तः, यथा पृष्टेरुपतिष्ठतेत्यादावात्मनेपदानुरोधेन समीपास्थितिरूपशक्यार्थविशिष्टमुपस्थानम् ॥"—इति ॥

न च—हिंसापूर्वकयाग एव धातोर्लक्षणाऽस्तु; अग्नीषोमीयं पशुमित्यस्योभयत्रान्वयान्नानुपपत्तिरिति—वाच्यम्; तथा सति न हिंस्यादित्यत्र हिंसिधातोर्विहितहिंसातिरिक्तहिंसायां लक्षणापत्त्या गौरवात्, तदपेक्षया आलभेतेत्यस्य केवलयागे लक्षणाङ्गीकारस्य युक्तत्वात्, किं च विशेषणविशेष्ययोरुभयोर्विध्यर्थान्वयाबाधस्थल एव विशिष्टस्य विधेयत्वं न तु विशेषणे तद्बाधे; अनित्यो घट इत्यादौ विशेषणेऽनित्यत्वानन्वयात्, प्रकृते च हिंसायां विध्यर्थान्वयस्य न हिंस्यादित्यनेन बाधितत्वान्न विशिष्टविधिसम्भवः। न च—न हिंस्यादित्यस्य विहितहिंसातिरिक्तहिंसानिषेधकत्वान्न विशिष्टविधिबाधकत्वमिति—वाच्यम्। तथा सत्यन्योन्याश्रयापत्तेः, विधिवाक्यस्य विशिष्टविषयत्वे सिद्धे निषेधस्य विहितातिरिक्तपरत्वासिद्धिः, तत्सिद्धौ च विधेर्विशिष्टपरत्वसिद्धिरिति ॥

न च—'रुरुशशकूर्मवराहमेषमांसैस्सांवत्सराणि' इत्यादिश्राद्धकल्पस्थ-मांसविधायकस्मृत्या न हिंस्यादिति निषेधस्य विहितहिंसातिरिक्तपर-त्वावश्यकत्वान्नान्योन्याश्रय इति—वाच्यम्; उक्तस्मृतेर्मांसविक्रयि-भ्यस्सकाशान्मांसं क्रयेण सम्पाद्य श्राद्धकर्तव्यतापरत्वात् हिंसापरत्वा-भावात्, पत्नीसंयाजेषु 'जाघन्या पत्नी संयाजयन्ती' इति पत्नीसंयाजार्थक तया विहिताया आलभमन्तरेण क्रयादिना लब्धाया गोपालरूपजाघ-न्याग्रहणस्य जाघनीचैकादशत्वादिति तार्तीयीकाधिकरणसिद्धत्वात्॥

न चैवमपि—श्राद्धकल्पस्थपश्वालम्भविधिपरस्मृत्या तादृशनिषे-धस्य विहितातिरिक्तपरत्वमावश्यकमिति—वाच्यम्; तादृशस्मृतीनां गवालम्भादिना सम्पादितमांसेनापि श्राद्धं कर्तव्यमिति श्राद्धकर्तव्य-तावश्यकतापरत्वात्। उक्तं च **पाशुपताधिकरणटीकायां**—

"मांसेनापि श्राद्धं कर्तव्यमित्यवश्यं श्राद्धकर्तव्यतातिवाद-रूपत्वात् तादृशवचनानाम् ॥" —इति॥

अस्तु वा तादृशवचनानां गवालम्भविधायकत्वम्। तथाऽपि तादृशस्मृत्या श्राद्धकल्पस्थगवालम्भव्यतिरिक्तपरत्वमेव निषेधस्या-वगम्यते, न तु यागीयहिंसातिरिक्तपरत्वमपीति पूर्वोक्तान्योन्याश्रयो दुर्वारः। एवं च यागीयपश्वालम्भनस्य हिंसाशब्दार्थत्वानङ्गीकारेण श्रीभाष्योक्तनिर्वाह एव युक्तः॥

तदेतदभिप्रेत्योक्तं **टीकायां**—'अयमेव समीचीनो दुष्प्रधर्षणः परि-हारः' इति। यागीयपश्वालम्भनस्य हिंसात्वाभावश्च। 'न वा उ एत-न्म्रियसे न रिष्यसि देवान् इदेषि पथिभिस्सुगेभिः' इति संज्ञपनमं-त्रात्मकश्रुत्या, 'तस्माद्यज्ञे वधोऽवधः' इति मनुस्मृत्या च सिद्धः। न रिष्यसि—न हिंस्यसे, यतो देवान् इदेषि प्राप्नोषि—इत्यर्थाद्दुःखजन-कव्यापारस्यापि बलवदिष्टजनकत्वेन हिंसात्वाभावबोधनात्। न च—

हिंसिधातोर्न दुःखजनकव्यापारे शक्तिः, तथा सति निष्ठुरवचनादिना दुःखजनकस्यापि पुरुषस्य हिंसकत्वव्यवहारापत्तेः ; किन्तु मरणावच्छिन्नव्यापार एव शक्तिरिति व्रणचिकित्सादौ नातिप्रसङ्ग इति बलवदिष्टाजनकत्वविशेषणं युक्तमिति—वाच्यम् ; **छान्दोग्ये भूमविद्यायां**—

"स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वा आचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वास्त्वित्येवैनमाहुः, पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमसि आचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसि" —

इति निष्ठुरवक्तुरपि हिंसकत्वव्यवहारेण मरणावच्छिन्नव्यापारे तच्छक्त्ययोगात् दुःखजनकव्यापार एव शक्त्या उक्तविशेषणस्यावश्यकत्वात् ॥

न चैवं—भेदाभेदश्रुत्योश्शरीरात्मभावप्रतिपादकघटकश्रुत्या विरोधपरिहारवत् हिंसाविधिनिषेधयोरपि 'अहिंसन् अन्यत्र तीर्थेभ्यः' इति छान्दोग्यसिद्धोत्सर्गापवादन्यायेन विरोधपरिहारो युक्तः ; तत्राहिंसन्नन्यत्र तीर्थेभ्य इत्यस्य यागेभ्योऽन्यत्रेत्यर्थकत्वादिति—वाच्यम् । उक्तरीत्या यागीयहिंसाया विधानाभावेनोत्सर्गापवादन्यायाप्रवृत्तेः, तादृशश्रुतेः गृहस्थानामवर्जनीयतुलस्याहरणादिजन्यहिंसाव्यावृत्तिपरत्वात् ॥

एतेन—प्रकृतस्थले शङ्करभाष्ये उत्सर्गापवादन्यायप्रवृत्तिवर्णनं—निरस्तम् ॥

**यदपि भामतीकल्पतरुग्रन्थयोरुक्तम्**—विशेषविधिविहितार्थस्य सामान्यविधिना क्रोडीकारो हि उत्सर्गापवादन्यायः । यथाऽऽहवनीये जुहोतीति होममात्रस्याहवनीयान्वयविधिना पदहोमस्यापि विषयीकारे

पदहोमान्वयविशेषविधानात् तदतिरिक्तपरत्वं सामान्यशास्त्रस्य, अत्र तूत्पत्तिसमय एव निषेधस्य–प्रसक्तं हि प्रतिषिध्यते–इति न्यायेन पुरुषार्थहिंसाविषयत्वावगमान्न क्रत्वर्थहिंसाप्रवेशः । शङ्कर-भाष्ये उत्सर्गापवादन्यायोक्तिस्तु अविशेषप्रवृत्तत्वेनावभासमानस्य शास्त्रस्य विशेषत्याजनालक्षणगुणसाम्याद्गौणीति शंकरभाष्ये शिक्षणं कृत्वा—निर्वाहान्तरं कृतम् ।

अत्रोच्यते—विशेषविधिविहितस्य सामान्यविधिना क्रोडीकारो ह्युत्सर्गापवादन्याय इत्यस्य कोऽर्थः ? यत्र विशेषशास्त्रविधेयतावच्छेदकव्यापकं सामान्यशास्त्रविधेयतावच्छेदकं तत्रोत्सर्गापवादन्याय इत्यर्थ इति चेन्न; अग्नीषोमीयं पशुमालभेतेत्यादौ सामान्यशास्त्रस्य निषेधरूपत्वेनात्रोत्सर्गापवादन्यायस्य प्रसक्तेरेवाभावेन पुरुषार्थहिंसा-परत्वावलम्बनेन तद्वारणानौचित्यात् ॥

न च–सामान्यशास्त्रविधेयतानिषेध्यतान्यतरावच्छेदकं यत्र विशेष-शास्त्रविधेयतावच्छेदकव्यापकं तत्र तन्नचाय इत्यर्थान्नानुपपत्तिरिति –वाच्यम् । तथा सति यत्र सामान्यशास्त्रं विधिरूपं विशेष-शास्त्रं च निषेधरूपं तथाविधे 'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति' इति सामान्यतः यज्ञे प्रवर्ग्यविधिसमभिव्याहृते 'न प्रथमयज्ञे प्रवृ-ञ्ज्यात्' इति निषेधस्थले तादृशन्यायानापत्तेः ॥

न च–विशेषशास्त्रविधेयतानिषेध्यतान्यतरावच्छेदकव्यापकमिति विवक्षणान्न दोष इति–वाच्यम्; गामानय, बलीवर्दमानय–इत्यादावपि तदापत्तेः । न चेष्टापत्तिः । विरुद्धविषये उत्सर्गापवादन्यायः, अवि-रुद्धविषये गोबलीवर्दन्याय इति सिद्धान्तात्; 'नानृतं वदेदाहिताग्नि-र्नानृतं वदेत्', 'ब्राह्मणो न हन्तव्यः, आत्रेयो न हन्तव्यः' इत्यादौ सामान्यनिषेधे सत्यपि प्रत्यवायाधिक्यबोधनाय विशेषनिषेधस्थले ऽप्युत्सर्गापवादन्यायापत्तेश्च ॥

न च—विशेषशास्त्रविधेयतावच्छेदकव्यापकं यत्सामान्यशास्त्रनिषेध्यतावच्छेदकं यत्र विशेषशास्त्रनिषेध्यतावच्छेदकव्यापकं सामान्यशास्त्रविधेयतावच्छेदकं तदुभयस्थलेऽप्युत्सर्गापवादन्यायप्रवृत्तिरित्यर्थान्न दोष इति—वाच्यम्। एवं सति पदाहवनीयशास्त्रस्थले तन्न्यायानापत्तेः; न परदारान् गच्छेन्न काञ्चन परिहरेत्—इत्यत्राप्युत्सर्गापवादन्यायानापत्तेश्च। तत्र वामदेव्योपासकस्य विधीयमानं यत्प्रार्थयमानसर्वयोषिद्गमनं तत्त्वस्य स्वस्त्रीगमनसाधारणस्य निषेध्यतावच्छेदकीभूतपरदारगमनत्वव्यापकत्वाभावात्॥

न च—'न काञ्चन परिहरेत्' इत्यत्र काञ्चनेत्यस्य स्त्रीभिन्नां कामपीत्यर्थः; स्वस्त्रीगमनस्य शास्त्रान्तरेणैव सिद्धेरिति—वाच्यम्। एवमपि—अमावास्यायां पितृभ्यो दद्यात्, न रात्रौ श्राद्धं कुर्वितेत्यत्रापि उत्सर्गापवादन्यायानापत्तेः। तत्र निषेध्यतावच्छेदकीभूतरात्रिश्राद्धत्वस्याष्टकादिश्राद्धसाधारणस्यामावास्याश्राद्धत्वव्याप्यत्वाभावात्। व्यापकत्वस्थाने सामानाधिकरण्यनिवेशान्नोक्तदोष इत्यपि न सत्; सा तथाऽपि 'साक्षी चेता केवलो निर्गुणश्च', 'यस्सर्वज्ञस्सर्ववित्' इत्यादावुत्सर्गापवादन्यायापत्तेः। न चेष्टापत्तिः, निर्गुणश्रुतेर्विहितसर्वज्ञताद्यतिरिक्तनिषेधपरत्वे निर्विशेषब्रह्मासिद्धिप्रसङ्गात्॥

न च—विशेषशास्त्रतात्पर्यविषयीभूतविधेयतानिषेध्यतान्यतरावच्छेदकसमानाधिकरणमिति निवेशान्नानुपपत्तिः; सगुणप्रकरणगुणबोधकश्रुतौ 'सत्यकामं ब्रह्मोपासत' इत्येवं विधायां सत्यकामत्वादेर्द्वितीयार्थप्रकारित्वेऽन्वयात् प्रकारितायाश्च ब्रह्मविशेष्यतावच्छेदेनोपासनायामन्वयाद्ब्रह्मणि सत्यकामत्वादिप्रकारकोपासनायां तात्पर्येऽपि ब्रह्मणि सत्यकामत्वादिवैशिष्ट्यतात्पर्याभावात्, निर्गुणप्रकरणस्थले गुणबोधकश्रुतेर्निषेधार्थमनुवादरूपतया गुणांशे तात्पर्याभावात् न तत्रोक्तन्यायप्रसक्तिः। अत एव—'जर्तिलयवाग्वा वा जुहुयाद्गवी-

धुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान्, अथो खल्वा-हुः अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोति' इत्यत्र जर्तिल-यवाग्वादिहोमे न विधिः, किं तु पशुहिंसानिन्दार्थमनुवादः पयस्तुत्यर्थः, न तु विहितप्रतिषेधाद्विकल्प इति प्रथमाष्टमे स्थितमिति—वाच्यम्। गुणोपसंहारपादे 'आनन्दादयः प्रधानस्य' इति सूत्रे उपासनाप्रकारी-भूतानामप्यानन्दादीनां ब्रह्मणि वैशिष्ट्ये आनन्दं ब्रह्मेत्यादिश्रुति-तात्पर्यस्य व्यतिहारसूत्रे च 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इति श्रुत्युक्तस्य जीवे ईश्वराभेदस्य ईश्वरे वा जीवाभेदस्य ध्यानप्रकारत्वे-ऽपि तयोस्तद्वैशिष्ट्येऽपि तात्पर्यस्योत्तरतापनीयादौ निर्गुणोपास्ते-रुक्तत्वेऽपि तद्वैशिष्ट्ये तात्पर्यस्य भवद्भिरेवोक्तत्वेन उपासनप्रकारी-भूतानामपि गुणानां श्रुतितात्पर्यविषयत्वस्य दुर्वारत्वात्; निर्गुण-प्रकरणस्थगुणश्रुतेरनुवादरूपत्वे निर्गुणत्वनिषेधरूपसत्यकामत्वादि-विधानार्थं निर्गुणत्वस्यानुवाद इति विनिगमनाविरहेणापत्तेः, जीव-ब्रह्माभेदश्रुतेरपि तथात्वापत्तेश्च; तादृशगुणश्रुतेरपि गुणे तात्पर्यस्य दुर्वारत्वात्, उत्सर्गापवादन्यायप्रवृत्तेस्तत्र वज्रलेपत्वात्। एवं न हिंस्यादित्यत्रापि विधेयतावच्छेदकीभूतपशुहिंसात्वव्यापकत्वस्य निषे-ध्यतावच्छेदके सर्वभूतहिंसात्वे सत्त्वेन तन्न्यायस्य दुर्वारत्वात्॥

न च—निषेधे हिंसिधातोः पुरुषार्थहिंसैवार्थ इति—वाच्यम्; पुरु-षार्थहिंसाबोधस्य लक्षणां विना सम्भवात्; तादृशलक्षणाया एव तन्न्यायफलत्वात्॥ न च—कर्त्रर्थकाख्यातेन हिंसायां कर्तृनिष्ठत्व-प्रतीत्या पुरुषार्थहिंसैव निषेध्यतया प्रतीयत इति—वाच्यम्; क्रत्वर्थ-हिंसाव्यावृत्तस्य सर्वपुरुषार्थसाधारणस्याख्यातबोध्यस्य पुरुषार्थ-त्वस्य निर्वचनासम्भवात्। तथा हि—पुरुषार्थत्वं न तावत्पुरुषकृति-साध्यत्वं, तस्याख्यातबोध्यत्वेऽपि क्रत्वर्थहिंसाव्यावृत्तत्वाभावात्। अत एव नेष्टसाधनत्वं, अख्यातबोध्यत्वाभावाच्च॥

**ननु**—क्रतुजन्यपरमापूर्वभिन्नं यदिष्टं तत्साधनत्वमेव पुरुषार्थत्वम्। क्रत्वर्थहिंसायां क्रतुजन्यपरमापूर्वोत्पत्त्यभावप्रयोजकीभूताभावप्रतियोगिकलिकापूर्वजनकतात्मकं यत्परमापूर्वप्रयोजकत्वरूपं क्रत्वर्थत्वं, तस्य सत्त्वेऽपि तदतिरिक्तेष्टसाधनत्वाभावान्नानुपपत्तिः। गोदोहनेन पशुकामस्य प्रणयेदित्युक्तप्रणयने च परमापूर्वातिरिक्तपशुरूपफलसाधनत्वबोधात् पुरुषार्थत्वोपपत्तिः—**इति चेन्न**॥ निरुक्तपुरुषार्थत्वस्य न हिंस्यादिति निषेधवाक्येनाबोधनात् तद्विशिष्टहिंसात्वस्य निषेध्यतावच्छेदकत्वानुपपत्तेः॥

**यत्तु**—प्रसक्तं हि प्रतिषिध्यत इति न्यायेन हिंसायाः लोके इष्टसाधनत्वेन प्रसक्तत्वात् तेनैव रूपेण निषेधावश्यकत्वात् निषेधवाक्ये तेनैव रूपेण बोधः; पदादुपस्थितस्येव प्रत्यक्षादिनोपस्थितस्यापि शाब्दबोधे भानात् घटकर्मत्वादिबोधे घटः कर्मत्वमित्यादिनिराकाङ्क्षपदाजन्योपस्थितित्वेन प्रत्यक्षादिसाधारण्येन हेतुत्वात्। अत एव घटेन जलमाहरेत्यादौ योग्यतावशादुपस्थितस्य छिद्रेतरत्वादेर्बोधः। एवं चैत्रोऽयमित्यादौ लोके 'उद्भिदा यजेत पशुकामः' इत्यादौ वेदे च प्रत्यक्षोपस्थितानामेव चैत्रोद्भिदादिपदानां नामत्वेनान्वयः; अन्यथा चैत्रपदवाच्योऽयं, उद्भित्पदवाच्येन यागेनेत्यादिबोधे तत्र लक्षणाप्रसङ्गात्। न चेष्टापत्तिः; अगृहीतशक्तिके पदे शक्यसम्बन्धरूपलक्षणाग्रहासम्भवात्। नामार्थयोर्भेदेन नान्वय इत्यस्य नामजन्योपस्थितिविषययोरेव भेदेन नान्वय इत्यर्थात् प्रत्यक्षादिनोपस्थितस्य नाम्नो भेदेनान्वयेऽपि नानुपपत्तिः। एवं च—'हिमालयो नाम नगाधिराजः', 'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यादि यथाश्रुतमेव सङ्गच्छते। प्रत्यक्षोपस्थितहिरण्यपदपूर्वककशिपुपदस्यैव वाच्यतासम्बन्धेनान्वयात्, ततश्च लोकावगतेष्टसाधनत्वादिरूपेणैव हिंसाबोधनात्, तेनैव रूपेण निषेध इति न तन्न्यायप्रवृत्तिः॥ —**इति**॥

तन्न । तथा सति सूत्रयोजनादौ सर्वत्र पदाध्याहारानुषङ्गादिना बोधोपपादनस्य शङ्करभाष्यादिसिद्धस्यानुपपत्तेः । सौर्ये चरावतिदेश-प्राप्ते 'अग्नये जुष्टं निर्वपामि' इति मन्त्रे अग्निपदबाधेन सूर्यपदाध्याहार-रूपस्योहस्य विश्वजिता यजेतेत्यादौ स्वर्गकामपदाध्याहारस्य च पूर्व-तन्त्रसिद्धस्य चानुपपत्तेश्च, तत्र तत्र तत्तदध्याहारेणैवोपपत्तेः ॥

अथ—

आद्यसूत्रे श्रीभाष्ये—"एवं किल बालाश्शब्दार्थसम्ब-न्धमवधारयन्ति । मातापितृप्रभृतिभिरम्बातातमातुलादीन् शशिपशुनरमृगपक्षिसर्पादींश्च एनमवेहि इमञ्चावधारयेत्य-भिप्रायेण अङ्गुल्या निर्दिश्य निर्दिश्य तैस्तैश्शब्दैस्तेषु तेष्वर्थेषु बहुशश्शिक्षिताश्शनैश्शनैस्तैस्तैरेव शब्दैस्तेष्वर्थेषु स्वात्मनां बुद्ध्युत्पत्तिं दृष्ट्वा शब्दार्थयोस्सम्बन्धान्तरादर्शनात् सङ्केतयितृपुरुषाज्ञानाच्च तेषु तेष्वर्थेषु तेषां शब्दानां प्रयोगो बोधकत्वनिबन्धन इति निश्चिन्वन्ति"—इत्युक्तम् ॥

तत्र पुरोवृत्तिविशेष्यकाम्बादिपदप्रकारकबोधो न पदशक्तिज्ञान-जन्योपस्थितिजन्यः, तादृशबालस्य पूर्वं पदसामान्ये शक्तिग्रहाभावात्; किं तु श्रावणप्रत्यक्षरूपपदोपस्थितिचाक्षुषप्रत्यक्षरूपार्थोपस्थितिजन्यः॥

न च—पदवृत्तिज्ञानजन्यपदार्थोपस्थित्यभावे कथं शाब्दबोध इति—वाच्यम्; प्रत्यक्षादिना वा पदवृत्त्या वा उपस्थितपदार्थानां संस-र्गावगाहिज्ञानं हि शाब्दबोधः, न तु पदवृत्त्युपस्थितानामेव संस-र्गावगाहिज्ञानं तथा; पदाभावेऽपि भाट्टमते बोधाङ्गीकारात् ॥

उक्तं च वाक्याधिकरणे भाट्टैः—

"पश्यतश्श्वेतिमारूपं हेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेताश्वो धावतीति धीः ॥
दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित् ।" —इति ॥

शाबरभाष्येऽप्युक्तं-

"अन्तरेणापिपदं शुक्लादेरन्वयधीः" —इति ॥

इदं च **न्यायरत्नाकरे** व्याख्यातं—"अश्वत्वाद्युपलक्षितं श्वेतं पश्यन् तस्मिन् प्रदेशे हेषाशब्देनाश्वं खुरशब्देन गमनं चानुमिनोति—इति अनुपलब्धिप्रमाणेन तत्प्रदेशे श्वेतत्वाद्यन्वययोग्यस्य वस्त्वन्तरस्यानुपपन्नत्वं जानन् पुरुषः कल्पयति श्वेतत्वादीनामन्यान्वयसाकाङ्क्षाणां मिथोऽन्वयं विना अनुपपन्नत्वधीसहकृतं, साकाङ्क्षाणां मिथोऽन्वययोग्यत्वधीसहकृतं च श्वेतत्वादीनां ज्ञानं मिथोऽन्वयधीकारणम्"—इति ॥

न च—घटमानयेत्यादौ पदानां समभिव्याहारज्ञानस्यापि कारणत्वेन क्लृप्ततया तदभावे कथं शाब्दबोधः, अतस्तत्र श्वेतो धावतीति वाक्यकल्पनावश्यकत्वात्, पदवृत्तिज्ञानजन्योपस्थितेरेव शाब्दधीहेतुत्वमिति इयमम्बेत्यादौ न शाब्दबोधसम्भव इति—वाच्यम्; पर्यायपदान्तरसमभिव्याहारजन्यबोधे व्यभिचारवारणाय समभिव्याहारज्ञानजन्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशावश्यकतया तदनुत्तरबोधे तस्य कारणताविरहेण वाक्यकल्पनस्य विफलत्वात् । एवमनुपपत्तिज्ञानकार्यतावच्छेदकमपि तदुत्तरशाब्दत्वं, अतो वाक्यजन्यशाब्दबोधस्थले तदसत्त्वेऽपि न क्षतिः ॥ न च—वाक्याजन्यबोधस्थलेष्वनुपपत्तिज्ञानकल्पनापेक्षया वाक्यकल्पनं युक्तमिति—वाच्यम्; नानावर्णघटितपदानां कल्पनापेक्षया एकस्यानुपपत्तिज्ञानस्यैव कल्पनाया लघुत्वात् । सम्भवति च श्वेतत्वं तद्देशे दृश्यमानमश्वान्यासंसर्गित्वेन प्रतीयमानं अश्वसंसर्गित्वं विनानुपपन्नमिति धीः । एवं धावनेऽप्यनुपपन्नत्वधीर्बोध्या ॥ न च—यत्र गवाश्वादिसम्भाविते देशे श्वेतत्वादिकं दृश्यते तत्रानुपपत्तिज्ञानाभावात् तत्र वाक्यकल्पनमावश्यकमिति—वाच्यम्; तत्रापि गवाश्वान्यासंसर्गित्वेन प्रती-

यमानं श्वेतत्वं तदन्यतरसंसर्गं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानेन विप्रतिपत्तिवाक्यस्थल इव गौरश्वो वा श्वेतो धावतीति संशयात्मकशाब्दबोधस्यैवाङ्गीकारात् ॥ **श्रीभाष्येऽपि**—'शब्दार्थयोस्सम्बन्धान्तरादर्शनात्' इत्यनुपपत्तिज्ञानमुक्तम्; सम्बन्धान्तरानुपपत्तिज्ञानादिति तदर्थः। संशयात्मकशाब्दबोधश्च श्रीभाष्यसम्मतः । **वैश्वानराधिकरणे**—"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति वैश्वानरविद्यावाक्यगतस्य वैश्वानरशब्दस्य जाठराग्नौ महाभूततृतीये देवतायां परमात्मनि च श्रुतौ तत्र तत्र प्रयोगात्, उपक्रमादिषूपलभ्यमानलिङ्गानामपि सर्वसाधारणत्वादुक्तार्थचतुष्टयविषयकसन्देह एव तादृशवाक्याज्जायते न तु परमात्मविषयकनिर्णय इति—**पूर्वपक्षं कृत्वा**; परमात्मासाधारणलिङ्गात् परमात्मनिर्णयो जायते—इति **सिद्धान्तकरणात्**; वैश्वानरस्साधारणशब्दविशेषादिति सूत्रे साधारणशब्दप्रयोगेन संशयपूर्वपक्षस्य सूचितत्वाच्च ॥

न च—पूर्वकाण्डे वेदप्रामाण्यस्य समर्थितत्वात् अप्रमाविशेषरूपसंशयात्मकबोधजनकत्वरूपाप्रामाण्यात्पूर्वपक्षो न युक्त इति—वाच्यम्; पूर्वतन्त्रे अपशूद्राधिकरणे शूद्रस्य यज्ञाद्यनधिकारसमर्थनेन तन्न्यायेन उपासनासामान्यानधिकारस्य सिद्धावपि "आजहारेमाश्शूद्रानेनैव मुखेनालापयिष्यथाः" इति शूद्रशब्देनामन्त्रणपूर्वकं जानश्रुतिं प्रति रैक्वस्य उपदेशदर्शनात्, संसर्गविद्यायां विशेषतो रथकाराधिकरणन्यायेन अधिकारस्यादित्याशङ्कानिरासाय पुनरधिकरणारम्भवदत्रापि साधारणशब्दनिमित्तकाधिकाशङ्काप्रयुक्तसंशायकत्वलक्षणाप्रामाण्यशङ्कानिरासाय वैश्वानराधिकरणारम्भोपपत्तेः ।

**यद्यपि**—टीकायां वेदप्रामाण्यसमर्थनात् संशयपूर्वपक्षासम्भवमभ्युपेत्य अर्थानियामात्पूर्वपक्ष एव वर्णितः, चतुर्ष्वर्थेष्वन्यतमानिर्धारणेऽपि सर्वथा कस्मिंश्चिदर्थे प्रमाणमेवेदमिति सामान्यतः प्रामाण्यस्यानपो-

दितत्वात् । विधिशब्दस्य मन्त्रत्वे भावस्स्यादिति दार्शमिकाधिकरणे आग्नेययागे 'यदाग्नेयोऽष्टाकपालो भवति' इति विहिते विधिगताग्निशब्दे-नैव हविस्त्यागवेलायां उद्देशः, उत पर्यायभूतशुचिपावकादिशब्देना-पीति संशये, अनियम इति पूर्वपक्षं कृत्वा विधिगताग्निशब्देनैवोद्देशा-दिति सिद्धान्तकरणादित्युक्तम् ॥ तथाऽपि टीकाकृतां वेदे संशयात्मक-बोधानङ्गीकारेऽपि लौकिकवाक्ये तथा बोधाभ्युपगमस्सूच्यते ; वाक्यस्य संशायकत्वाभावात् संशयपूर्वपक्षासम्भवमनुक्त्वा प्रामाण्यसमर्थनात्, संशायकत्वाभावोक्त्या लौकिकवाक्ये संशयसम्भवद्योतनात् । तथा च—पदानुपस्थितविषयकशाब्दबोधस्य श्रीभाष्य एवाङ्गीकारात् नहिंस्यादित्यादौ पुरुषार्थहिंसानिषेध इति युक्तम् ॥

—इति चेत् ॥

अत्रोच्यते—

शाब्दबोधो हि त्रिविधः—प्रत्यक्षाद्युपस्थितमात्रविषयकः, पदवृ-त्त्युपस्थितमात्रविषयकः, प्रत्यक्षाद्युपस्थितपदार्थपदवृत्त्युपस्थापितपदा-र्थोभयविषयकश्चेति ॥

**तत्राद्यः** पश्यतश्श्वेतिमारूपमित्यादिभाट्टोक्तस्थले, इयमम्बेत्या-दिभाष्योक्तस्थले च ; यद्यपि भाष्योक्तस्थले पदश्रवणमस्ति ; तथाऽपि पदवृत्तिज्ञानजन्योपस्थित्यभावात् पदवृत्त्यनुपस्थितार्थानामेव तत्र भान-मिति बोध्यम्। घटमानयेत्यादौ **द्वितीयः**। **तृतीयस्तु**—घटेन जलमाहरे-त्यादौ लोके उद्भिदा यजेतेत्यादौ नहिंस्यादित्यादौ च वेदे भवद्भिर-भ्युपगम्यते, स तु श्रीभाष्यमतेनाभ्युपगम्यते, पदानुषङ्गाध्याहारादे-स्तत्र तत्र वर्णनात्। युक्तञ्चैतत्, शाब्दीह्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायेन पदवृत्तिप्रयोज्यस्मृतेस्तदन्यस्मृतिसहकारेण बोधोपधायकत्वा-सम्भवात् । अस्तु वा श्रीभाष्यमते तादृशबोधाङ्गीकारात् पुरुषार्थ-हिंसायाः निषेधनिर्वाहः ॥ भवन्मते तु तथा निर्वाहो न युक्तः ;

भवन्मते तृतीयबोधाङ्गीकारे सदेव सोम्येदमग्र आसीदेकमेवा-द्वितीयमित्यत्रोपादानत्वोक्त्या निमित्तत्वस्योपस्थितत्वेन तद्विशिष्ट-द्वितीयस्यैवाद्वितीयशब्देन निषेधस्य युक्ततया अद्वितीयपदेन गुणादीनामपि निषेध इति भवत्सिद्धान्तस्य भङ्गप्रसङ्गापत्तेः । एवं चेतनगुणत्वसाम्याद्धेयत्वेनोपस्थितानां गुणानां निर्गुणश्रुत्या निषेधः, शरीरत्वसाम्यात्कर्मकृतत्वप्राकृतत्वादिना उपस्थितानामेवाशरीरश्रुत्या निषेध इत्याद्यापत्तेश्च दुर्वारत्वादित्यलं पल्लवितेन । तस्मात्पुरुषार्थ-हिंसाया एव निषेधो न क्रत्वर्थहिंसाया इति निर्वाहोऽपि श्रीभाष्यमत एव युज्यते ॥

एतेन—मधुना दीक्षिता ब्रह्मचारित्वादिति दाशमिकाधिकरणे सत्रमहीनं च द्वादशाहस्तत्र सर्वैर्मध्वशनं कर्तव्यं न वेति सन्देहे यजमा-नानामेव सत्रे दीक्षितानामृत्विक्त्वात् दीक्षितस्य ब्रह्मचर्यविधानात् ब्रह्मचारिणश्च मधुप्रतिषेधात् न कर्तव्यं सत्रे मध्वशनम् । न च संस्थिते पृष्ठ्ये षडहे मध्वाशयेद्घृतं वेति विहितमध्वशनाभावे वैगुण्या-पत्तिः ; घृताशनेन साद्गुण्यसम्भवात् । अतो मध्वशनमहीनविषयमिति प्राप्ते ब्रह्मचारिणां निषेधस्य पुरुषार्थमध्वशनविषयत्वान्न क्रत्वर्थस्य मध्वशनस्य निषेध इति स्थापितं ; तन्न्यायेनात्रापि पुरुषार्थहिंसाया एव निषेध इति—निरस्तम् ॥ मध्वशननिषेधशास्त्रगतब्रह्मचारिपदस्य प्रतिपदोक्तब्रह्मचारिपरतयैव द्वादशाहे सत्रे मध्वशनोपपत्तौ धातोः पुरुषार्थाशनपरत्वस्यायुक्तत्वात् निषेधशास्त्रगतं ब्रह्मचारिपदं उपदि-ष्टातिदिष्टसाधारणब्रह्मचारिपरं उतोपदिष्टमात्रपरमिति संशय्य ; अति-दिष्टसाधारणब्रह्मचारिपरं, असति बाधके प्रमाणानां सामान्ये पक्ष-पात इति न्यायात् , न च द्वादशाहे मध्वशनशास्त्रं बाधकं, तस्या-हीनद्वादशाहे सावकाशतया बाधकत्वायोगादिति पूर्वपक्षे—ब्रह्मचारि-पदस्यातिदिष्टसाधारणत्वे लक्षणाप्रसङ्गात् इष्टमात्रविषयतया सत्रेऽपि

मध्वशनोपपत्तिः, ज्योतिष्टोमे दीक्षितस्य ब्रह्मचर्यविधानादतिदेशेनैव क्रत्वर्थतया ब्रह्मचर्यप्राप्तेरित्यधिकरणशरीरस्य भाष्यकृतामभिप्रेतत्वात् पुरुषार्थनिषेधपरत्वेऽपि श्रीभाष्यमते न बाधकमिति चानुपदमेवोपपादितम् ॥

**इदं तावत्प्रसङ्गाद्विचार्यते** उद्गीथविद्यायाः क्रत्वर्थत्वमुत पुरुषार्थत्वं ?

**न तावत्क्रत्वर्थत्वं**; 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इत्युद्गीथोपासनशून्यस्यापि क्रतुकर्मत्वोक्त्या उद्गीथोपासनस्य व्यभिचारेण क्रतुजन्यपरमापूर्वजनककलिकापूर्वजनकत्वरूपक्रत्वर्थत्वायोगात् ॥

**अथ**—तत्रर्त्विजामुपासनाभावेऽपि ब्रह्मकर्तृकोपासनस्य सत्त्वान्न व्यभिचारः। उद्गीथोपासनस्य ऋत्विग्गतकलिकापूर्वं प्रति नापृथक्सिद्धिसम्बन्धेन कारणत्वं, किन्तु स्वविषयोद्गीथादिकर्तृत्वसम्बन्धेन। तथा च—ब्रह्मकर्तृकोपासनस्याप्युक्तसम्बन्धेन ऋत्विक्षु सत्त्वान्नानुपपत्तिः; 'एवं—विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' इति ब्रह्मणो वेदनेनैव ऋत्विजां रक्षणश्रवणात्। तत्रोद्गीथोपासनेन यज्ञयजमानयो रक्षणं क्रतुफलाप्रतिबन्धकरणं, ऋत्विजां रक्षणं च स्ववेदनेनोक्तसम्बन्धेन ऋत्विग्गतेन कलिकापूर्वजननमिति विवेकात्। एवं-होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीति उद्गातुरुपासनाभावे होतृगतेनोपासनेन समाधानाभिधानाच्च, उक्तप्रत्यासत्त्यैवोद्गीथोपासनस्य करणताबोधनात् ॥ होतृषदनात्—होतृकर्तृकोद्गीथप्रणवैक्यज्ञानात्, दुरुद्गीथं—स्वकर्तृकवेदनरहितमुद्गीथं, अनुसमाहरति—उद्गाता समादधातीत्यर्थात्। उद्गीथप्रणवैकत्वविज्ञाने होत्रा उद्गात्रा च कर्तव्ये तत्रोद्गातुरेतादृशज्ञानाभावेऽपि न दोषः। प्रणवे होतुरुद्गीथे उद्गातुश्च कर्तृत्वेन होतृगतज्ञानेनैवोद्गातरि कलिकापूर्वसम्भव इति तद्वाक्यतात्पर्यात्—इति चेन्न ॥ यत्र ब्रह्मादीनामप्युद्गीथोपासनं नास्ति तत्र व्यभिचारेण परमापूर्वप्रयोजकत्वरूपक्रत्वर्थत्वासम्भवात्। न च—

तादृशस्थले क्रतुना परमापूर्वमेव न जायत इति—वाच्यम्। **ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्** इत्यधिकरणे तादृशक्रतोरपि परमापूर्वजनकत्वाभ्युपगमात् ; तदधिकरणे हि यज्ञस्य फलं स्वर्गादिकमिव विद्याऽपि 'यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषन्ति' इति श्रुतेः ॥

सा च विद्या—अभ्युदयफला मुक्तिफला चेति द्विविधा । तत्राभ्युदयफला विद्या उद्गीथविद्यासहितयज्ञेन तज्जन्मन्येव निष्पद्यते; 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुत्या उद्गीथविद्यासहितकर्मफलस्य प्रबलकर्मणा प्रतिबन्धाभावरूपवीर्यवत्तरत्वश्रवणात्; उद्गीथविद्यारहितयज्ञेन तु प्रतिबद्धत्वाभावे तज्जन्मनि सति प्रतिबन्धके तद्विगमानन्तरं विद्या निष्पद्यत इति व्यवस्थापितम् । उद्गीथविद्यारहितयज्ञेन परमापूर्वजनने प्रतिबन्धकविगमानन्तरमपि विद्यानिष्पादकत्वानुपपत्त्या तस्य परमापूर्वजनकत्वमपि तदधिकरणानुमतमित्युद्गीथविद्याया व्यभिचारात् तत्प्रयोजकत्वं न सम्भवति ॥ न च—व्रीहियवयोर्व्यभिचारेऽप्यव्यवहितोत्तरत्वं निवेश्य परमापूर्वप्रयोजकत्वोपपादनवदत्रापि तत्सम्भव इति—वाच्यम्। यदेव विद्यया करोतीति श्रुत्या हि प्रबलकर्माप्रतिबद्धप्रयोजकत्वं विद्याया अवगम्यते ; "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलं" इति सूत्रे तथोक्तत्वात् । अप्रतिबन्धप्रयोजकत्वं च—प्रबलकर्मनिष्ठप्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वरूपमुत्तेजकत्वम् ; सिषाधयिषाया अनुमित्यप्रतिबन्धप्रयोजकत्वस्य सिद्धिनिष्ठप्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वरूपत्वात्, अनुमितौ सिषाधयिषाविरहविशिष्टसिद्धेरिव क्रतुजन्यफले उद्गीथविद्याविरहविशिष्टप्रबलकर्मणः प्रतिबन्धकत्वात् । एवं च क्रतुजन्यपरमापूर्वं प्रति हेतुत्वस्यैवाभावान्नाव्यवहितोत्तरत्वनिवेशेन तदुपपादनमिति तस्य न क्रत्वर्थत्वम् ॥

**अत एव न पुरुषार्थत्वमपि** । गोदोहनादेः परमापूर्वभिन्नपश्वादिफलकत्ववदस्याः फलान्तराजनकत्वात् ॥ —**इति चेन्मैवम्** ॥

अनुमितिस्थले सिद्धिकालीनानुमितौ सिषाधयिषायाः कारणत्वमित्येकः पक्षः। सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यानुमितिसामान्ये कारणत्वादुत्तेजकत्वमित्यपरः पक्षः । तत्र द्वितीयपक्षे सिषाधयिषायाः विशेषणाभावरूपतया प्रतिबन्धकाभावरूपविशिष्टाभावसम्पादकत्वम् । तथोद्गीथविद्याया अपि **प्रथमपक्षे**—प्रबलकर्मकालीनक्रतुफले तस्याः कारणत्वात् क्रत्वर्थत्वम् । क्रत्वर्थत्वं हि—न परमापूर्वप्रयोजकत्वमेव, किन्तु क्रतुफलप्रयोजकत्वम् । तच्च विद्यादिरूपफलप्रयोजकत्वेऽप्युपपद्यते। **द्वितीयपक्षे**—विशिष्टाभावरूपप्रतिबन्धकाभावप्रयोजकत्वात् विशेषणाभावरूपविद्यायाः पुरुषार्थत्वमुपपद्यते, पश्वादिवत्प्रतिबन्धकाभावस्यापि पुरुषेष्टत्वात्। एतेनोद्गीथविद्यायाः पुरुषार्थत्वे अन्यथात्वंशब्दादित्यधिकरणे उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलकत्वेऽपि आर्थवादिकमपि फलं तदविरुद्धं ग्राह्यमिति देवताधिकरणे प्रतिपादितमिति भाष्यं विरुध्यते ॥

तथा पुरुषार्थाधिकरणे—यदेव विद्यया करोतीति विद्यायाः तृतीयाश्रुत्या कर्माङ्गत्वप्रतिपादनात् न विद्यातः पुरुषार्थ इति तच्छ्रुतेरिति सूत्रेण पूर्वपक्षे कृते तत्र विद्याशब्दस्य प्रकृतोद्गीथविद्यामात्रविषयत्वेनोद्गीथविद्यामात्रस्य कर्माङ्गत्वेऽपि न ब्रह्मविद्यायाः कर्माङ्गत्वमस्तीति एतदर्थप्रतिपादकयोरसार्वत्रिकीतिसूत्रतद्भाष्ययोश्च विरोधस्स्यात्, तस्याः क्रत्वर्थत्वे च 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलं', 'अङ्गेषु यथाश्रयभावः' इत्यधिकरणद्वयस्य महता संरम्भेण क्रत्वर्थतानिराकरणपरस्य असङ्गतिरित्याशङ्क्य—उद्गीथविद्यायाः पुरुषार्थत्वमेव, उक्ताधिकरणद्वये व्यवस्थापितत्वात्; अन्यथात्वंशब्दादित्यधिकरणभाष्यं असार्वत्रिकीति सूत्रं चाभ्युपगम्यवादमात्रमिति—

केषां चित्समाधानमनुपादेयम्; अभिप्रायभेदेनाविरोधोपपादनादि-त्यलं प्रसक्तानुप्रसक्त्या। तस्मादग्नीषोमीयवाक्यस्य यागविधिपरत्वेन हिंसाविधायकत्वाभावात् हिंसाविधायकत्वेऽपि निषेधवाक्यस्य पुरुषार्थहिंसाविषयत्वात् उत्सर्गापवादन्यायो न सम्भवतीति सिद्धम् ॥

**एतेन**—अग्नीषोमीयवाक्यस्य यागविधिपरत्वेऽपि तादृशयागस्य हिंसां विनाऽनुपपन्नत्वेन तत्र प्रवृत्तिनिर्वाहाय हिंसाविधेरपि कल्पनीयत्वादुत्सर्गापवादन्यायो दुर्वारः—**इति निरस्तम्**; प्रत्यक्षनिषेधविरोधेन विधिकल्पनाया अयोगात् ॥

**न च**—सामान्यनिषेधस्य विशेषविधिकल्पनायां न प्रतिबन्धकत्वं, तथा सति 'त्रिभि ऋणवा जायते' इति ऋणश्रुत्या, 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति सन्न्यासे प्रत्यवायश्रुत्या, यावज्जीवमग्निहोत्रं जुहोति, स खल्वेवं वर्तयन्यावदायुषं' इति गार्हस्थ्यधर्माणां यावज्जीवानुवृत्तिश्रुत्या च सन्न्यासस्य बाधितत्वेन 'त्रयो धर्मस्कन्धाः' इत्याश्रमान्तरवत्सन्न्यासेऽपि विधिरिति विधिकल्पनस्य **विधिर्वाधारणवदिति** सूत्रसिद्धस्यानुपपत्तेः। एवं च—यथा सन्न्यासे विधिं कल्पयित्वा तेन ऋणादिश्रुतीनां सङ्कोचेनोत्सर्गापवादन्यायस्तथा प्रकृतेऽपि। प्रतिपादितं चेदं विधिर्वेत्यत्र **श्रीभाष्ये**—एवमाश्रमान्तरविधानात् ऋणश्रुतिर्यावज्जीवश्रुतिरपवादश्रुतिश्चाविरक्तविषया वेदितव्याः—**इति वाच्यम्** ॥ सामान्यनिषेधस्य विशेषविधिकल्पनप्रतिबन्धकत्वाभावे 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्', 'अबाधाच्च' इति सूत्रयोर्विरोधापत्तेः। तथा हि प्राणविद्यायां 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति छान्दोग्ये—'नास्यानन्नं जग्धं भवति' इति वाजसनेयके श्रवणात्। प्राणविद्यानिष्ठस्य सर्वदा सर्वान्नानुमतिरिति पूर्वपक्षे प्राणात्यय एव प्राणविदस्सर्वान्नानुज्ञानं न सर्वदा, ब्रह्मविदोऽप्युषस्तेः प्राणात्यय एव इभ्योच्छिष्टाशनस्य दर्शनेन

प्राणविदस्सर्वान्नानुमतिः प्राणात्यय एवेत्यस्य किंपुनर्न्यायसिद्धत्वात् ॥

न च—यथा ब्रह्मविद्यानिष्ठविषये अप्रवृत्तमपि न काञ्चनपरिहरेत् तद्व्रतमिति शास्त्रबलात् वामदेव्योपासकस्य प्रार्थयमानसर्वयोषित्परिग्रहानुज्ञानं न परदारान् गच्छेदिति निषेधोपमर्देन प्रवर्तते, तथा प्राणविद्यानिष्ठविषये सर्वान्नानुमतिर्विशेषशास्त्रबलात्स्यादिति—वाच्यम्। तत्र प्रत्यक्षविधिसत्त्वात् अत्र तदभावेन वैषम्यादिति पूर्वसूत्रेण सिद्धान्तिते अत्रापि विधिकल्पनं स्यादित्याशङ्कायां आहारशुद्धौ सत्त्वशुद्धिरिति प्रत्यक्षनिषेधविरोधेन विधिकल्पनासम्भवादित्यर्थपरस्याबाधाच्चेत्यस्य प्रवृत्तेः ॥

एवं च—सामान्यनिषेधस्य विशेषविधिकल्पने प्रतिबन्धकताविरहे तत्रापि विधिकल्पनसम्भवेन प्राणविद्यानिष्ठस्य सर्वदा सर्वान्नानुज्ञापत्तिर्दुर्वारा। सन्न्यासस्थले च 'ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्; यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्'—इतिजाबालश्रुतौ प्रत्यक्षविधिसत्त्वेन तद्बलेन ऋणादिश्रुतीनामविरक्तविषयतया व्यवस्थितत्वेन तादृशसामान्यनिषेधाप्रवृत्त्या 'त्रयो धर्मस्कन्धाः' इत्यत्र सन्न्यासविधिकल्पनस्य युक्तत्वात् ॥ न च—जाबालश्रुतिगतप्रत्यक्षविधिबलादेव सन्न्यासे प्रवृत्तिनिर्वाहात्त्रयो धर्मस्कन्धा इत्यत्र सन्न्यासविधिकल्पनं व्यर्थमिति—वाच्यम्; येन पुरुषेण जाबालवाक्यं न श्रुतम्, त्रयो धर्मस्कन्धा इत्यादिच्छान्दोग्यवाक्यमेव श्रुतं तस्य पुरुषस्य सन्न्यासे प्रवृत्तिनिर्वाहकतया सार्थक्यात्, **भेदान्नेति चेदेकस्यामपि** इतिसूत्रे वैश्वानरादिविद्यानां शाखाभेदेन श्रूयमाणानामैक्ये शाखाभेदेनैकस्या एव विधिभेदो व्यर्थ इत्याशङ्क्य तत्तच्छाखाध्यायिनं प्रति तस्य तस्य वाक्यस्य प्रवर्तकतया सार्थक्यस्योपपादितत्वात्, तन्न्यायस्य प्रत्यक्षविधिद्वयस्थल इव प्रत्यक्षकल्पितविधिद्वयस्थलेऽपि प्रवृत्तेः ॥

न चैवं—श्रीभाष्ये जाबालानामाश्रमविधिमसन्तमिव कृत्वैतेष्वन्यपरेष्वपि वाक्येषु आश्रमप्राप्तिरवश्याश्रयणीयेत्युपपादितमिति विधिर्वेति सूत्रस्य कृत्वाचिन्तापरत्वाभिधानं विरुध्यते, जाबालश्रुतौ प्रत्यक्षविधिसत्त्वेऽपि छान्दोग्ये विधिकल्पनसम्भवादिति—वाच्यम्। आश्रमविधिमसन्तमिव कृत्वेत्यस्य जाबालश्रुतिमनधीतवन्तं पुरुषं प्रति तादृशविधिमसन्तमिव कृत्वेत्यर्थाङ्गीकारेणाविरोधात्, अन्यथा सूत्रकारस्य सर्वज्ञस्य तादृशश्रुत्यपरामर्शकल्पनापत्तेः, पूर्वतन्त्रे क्वचित्कृत्वाचिन्ताया अगत्याऽभ्युपगमेऽपि सति गत्यन्तरे तदङ्गीकारस्यानुचितत्वात्॥

**वस्तुतस्तु**—त्रयो धर्मस्कन्धा इत्यत्र विधिकल्पनमयुक्तम्; कल्पकाभावात्, ऋणश्रुत्यादिभिर्बाधाच्च॥

**अथ**—त्रयो धर्मस्कन्धा इत्यत्र प्रतिपाद्यमाना आश्रमा विधिविषयाः, इष्टसाधनतया श्रुतिबोधितत्वात्, ज्योतिष्टोमादिवत्। न चासिद्धिः; तत्र यज्ञोऽध्ययनं दानमिति प्रथम इत्यनेन गृहस्थस्य, तप इति द्वितीय इत्यनेन वैखानसपरिव्राजकयोः, ब्रह्मचार्याचार्यकुलवासी तृतीय इत्यनेन ब्रह्मचारिणश्चोपपादनेन 'सर्व एते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति' इत्युत्तरवाक्ये एतच्छब्देन चतुर्णामाश्रमविशिष्टानां परामर्शेन तेषां ब्रह्मोपासनशून्यानां पुण्यलोकप्राप्तेः सति ब्रह्मोपासने मोक्षप्राप्तेश्च बोधनात्, धनवान् सुखीत्यादाविवोद्देश्यतावच्छेदकाविधेययोः प्रयोज्यप्रयोजकभावस्य संसर्गतया भानेन तत्तदाश्रमविशिष्टानां फलप्राप्त्यभिधाने तादृशाश्रमाणां फलजनकत्वभानात्, यज्ञोऽध्ययनं दानमिति प्रथम इत्यादौ इतिशब्दानन्तरं प्रवृत्तिमानित्यध्याहारेण यज्ञदानादिविषयकप्रवृत्तिमतो गृहस्थस्य तपोविषयकप्रवृत्तिमतोर्वैखानसपरिव्राजकयोश्च बोधनात्; घट इति ज्ञानवानित्यादौ घटविषयकज्ञानवतो बोधात्, ब्रह्मचार्याचार्यकुलवासी

तृतीय इत्यत्र पुरुषस्य ग्रहणेन पूर्ववाक्ययोरपि तत्तद्धर्मानुष्ठातृ-पुरुषपरत्वावश्यकत्वात्—इति चेन्न । उक्तानुमानस्य जाबालश्रुति-गतविधिविषयत्वमादायैव चारितार्थ्यात् विध्यन्तरकल्पकत्वायोगात्, धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायेन त्रयो धर्मस्कन्धा इत्यत्र उक्ताश्रमाननुतिष्ठेदिति विधिवाक्यं कल्पयित्वा तस्य 'सर्व एते पुण्यलोका भवन्ति' इत्यर्थवादमूलत्वकल्पनापेक्षया सिद्धस्यैव विधिवाक्यस्यार्थवादमूलत्वमात्रकल्पनस्योचितत्वात् ; विशेषणमात्र-कल्पनया निर्वाहे विशिष्टकल्पनायाः एकधर्मिकल्पनया निर्वाहे धर्मि-द्वयकल्पनायाश्चानुचितत्वात् । अत एव पूर्वतन्त्रे—'स्योनन्ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रति-तिष्ठ व्रीहीणां मे सुमनस्यमानः' इतिमन्त्रस्य दलद्वयसमभिव्याहा-रात्मकवाक्यप्रमाणात् बलीयसा लिङ्गेन यथार्हं विभज्य सदनकरणे पुरोडाशप्रतिष्ठापने च विनियोगमभिधाय समभिव्याहारात्मकैकवा-क्यताबलात् कृत्स्नं मन्त्रं सदनकरणे विनियोजयतो बोधायनस्य वचनमप्रमाणम् ॥

न च—कल्पसूत्रस्य स्वसमानविषयकश्रुतिमूलत्वकल्पनया प्रामाण्यं युक्तमिति—वाच्यम्; सिद्धे एकवाक्यत्वे विनियोगमूलकत्वकल्पना-पेक्षया तन्मूलत्वविशिष्टश्रुतिकल्पनस्य गुरुत्वादित्युक्तम् । अत एव च परमात्मनस्त्रैलोक्यशरीरप्रतिपादकं 'द्यां मूर्धानम्' इति स्मृतिवचनं स्वमूलत्वेन वैश्वानरविद्यायाः परमात्मविषयत्वं कल्पयतीति, 'स्मर्य-माणमनुमानं स्यात्' इति सूत्रस्य परेषां स्मृतिवचनं हि स्वमूलत्वेन श्रुतिं कल्पयति, न तु वैश्वानरविद्यामेव कल्पयितुं प्रभवति ; स्वस-मानविषयत्वेन प्रसिद्धायां 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति मुण्ड-कश्रुतौ स्वमूलत्वमात्रकल्पनेनोपपत्तौ परमात्मपरत्वेन सन्दिग्धायां वैश्वानरविद्यायां स्वसमानविषयत्वस्वमूलत्वोभयकल्पनायां स्मृतेस्साम-

र्थविरहादिति टीकायां दूषणमुक्तम् । एतत्सर्वमभिप्रेत्यैव विधिर्वेति सूत्रस्य श्रीभाष्ये कृत्वाचिन्तापरत्वोपपादनम् । तथा च त्रयो धर्मस्कन्धा इत्यत्र विधिकल्पनस्य श्रीभाष्याननुमतत्वात्सामान्यनिषेधस्थले विधिकल्पनायोगात्, कल्पितविधिनोत्सर्गापवादन्यायो निष्प्रमाणक एव ॥

**नन्वेवं**—'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यते' 'तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन' इत्याद्युत्तराघाश्लेषश्रुतौ 'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति पूर्वाघविनाशश्रुतौ चोत्तरपूर्वाघयोः अश्लेषविनाशकामो ब्रह्मोपासीत—इति फलविधिं कल्पयित्वा 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति सामान्यनिषेधस्याविद्वद्विषयतया सङ्कोचस्य तदधिगमउत्तरपूर्वाघयोरित्यधिकरणसिद्धतया प्रत्यक्षसामान्यनिषेधस्थलेऽपि विधिकल्पनस्य तेनोत्सर्गापवादन्यायस्य च दुर्वारता —इति चेन्न ॥ नाभुक्तमिति शास्त्रस्य प्रायश्चित्तविधायकशास्त्रेण विरोधपरिहारायाकृतप्रायश्चित्ते कर्मणां भोगं विना नाशाभावपरत्वावश्यकतया ब्रह्मविद्याया अपि प्रायश्चित्तत्वस्य—

"अपि चेत्पातकं किञ्चिद्योगी कुर्यात्प्रमादतः ।
योगमेव निषेवेत नान्यं कृच्छ्रं समाचरेत् ॥"—

इत्यादिशास्त्रसिद्धतया, उत्तरपूर्वाघाश्लेषविनाशबोधकशास्त्रस्य नाभुक्तमिति शास्त्रेण विरोधाभावादत्र प्रायश्चित्तविधिनैवोत्सर्गापवादन्यायस्य सिद्धत्वेन कल्पितविधिना तदनङ्गीकारात् ॥

**ननु**—प्रायश्चित्तविधिप्रयुक्तोत्सर्गापवादन्यायेन हि नाभुक्तमितिशास्त्रघटककर्मपदस्य निष्पन्नप्रायश्चित्तासमानकालीनकर्मलाक्षणिकत्व-

मेव वक्तव्यम्; अत्र निष्पन्नत्वानिवेशे अनिष्पन्नप्रायश्चित्तसमानकालीनकर्मणोऽप्यनुभवेन विनानाशापत्तेः। एवं च विद्यारम्भकाले पूर्वाघविनाशबोधकशास्त्रेण नाभुक्तमित्यस्य न विरोधपरिहारसम्भवः, विद्यायाः प्रायश्चित्तत्वेऽप्यारम्भकाले तस्या अनिष्पन्नत्वेन निष्पन्नप्रायश्चित्तासमानकालीनत्वस्य विद्यारम्भकालीनपूर्वाघेऽपि सत्त्वात्कल्पितविधिना तादृशन्यायस्य दुर्वारता—इति चेन्न॥ विद्यारम्भकाल एव पूर्वाघानां विनाशाङ्गीकारे "साम्पराये तर्तव्याभावात्तथा-ह्यन्ये" इत्यधिकरणविरोधापत्तेः; **तदधिकरणे** हि–कौषीतकिनां पर्यङ्कविद्यायां 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति'—इत्युपक्रम्य, 'स आगच्छति विरजां नदीं तां मनसाऽत्येति तत्सुकृतदुष्कृते धूनुते'–इति विरजानदीतरणानन्तरं सुकृतदुष्कृतनाशश्रवणात्, छान्दोग्ये–'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि'—इति शरीरवियोगकाले तच्छ्रवणादुभयश्रुत्यविरोधाय केषांचित्कर्मणां शरीरवियोगकाले नाशः, केषांचिच्च विरजातरणानन्तरम्—इति **पूर्वपक्षं प्राप्य**; कर्मणस्सुखदुःखभोगैकफलकत्वाद्देहवियोगानन्तरं भोक्तव्यसुखाद्यभावेन कर्मकल्पनस्य विफलत्वाद्देहवियोगकाल एव कृत्स्नकर्मनाशस्य कौषीतकीगतस्य तत्सुकृतदुष्कृते धूनुत इत्यस्य एतं देवयानमापद्येत्यस्य प्रागन्वयान्न विरोधः–इति **सिद्धान्तितम्**॥ तथा च–विद्यानिष्पत्त्यनन्तरमेव कर्मनाशाङ्गीकारान्निष्पन्नप्रायश्चित्ता-समानकालीनकर्मलक्षणयैव विरोधपरिहारोपपत्तिः॥

न चैवं–तदधिगम उत्तरपूर्वाघयोरित्यधिकरणे विद्यारम्भकाले पूर्वाघनाशव्यवस्थापनं विरुध्यत इति–वाच्यम्; विद्यारम्भे हि न पूर्वाघस्य विनाशो जायते; किन्तु विद्यारम्भः प्रीतस्य परमात्मन एतदुपासनसमाप्तावेतस्याघनाशो भूयादिति सङ्कल्पो जायते। विनाशस्तु

देहवियोगकाल एव, भगवतस्सत्यसङ्कल्पत्वात् सङ्कल्पमात्रेण विनाशस्य सिद्ध्यावश्यकत्वेऽपि तादृशसङ्कल्पविषयीभूतकालाभावान्न सिद्धिः, अथापि सिद्धप्राय इत्यभिप्रायेण सूत्रे अश्लेषविनाशाविति विनाशपदोपादानात् ॥

प्रतिपादितं चेदं पूर्वपक्षसिद्धान्तरूपेण **टीकायाम्**—

"ननु—पूर्वं शरीरपातानन्तरं कर्मक्षय उक्तः; अत्र तूपासनारम्भे कर्मप्रहाणमुक्तं; कथमिदमुपपद्यते? उच्यते—उपासनारम्भसमाप्त्योः भगवत्प्रीतिविशेषाभिप्रायत्वात् अधिकरणद्वयाविरोधः। उपासनारम्भप्रीतः परमात्मा तत्समाप्तावुपासकस्याघं क्षपिष्यामीति सङ्कल्पयति; समाप्तौ तु क्षान्तमिति सङ्कल्पयति। अतोऽधिकरणद्वयार्थ उपपन्नः॥" —इति॥

न चैवमपि—नोक्तलक्षणया विरोधशान्तिः; देहवियोगकालेऽपि विद्याया अनिष्पन्नतया निष्पन्नप्रायश्चित्तसमानकालीनत्वस्य कर्मण्यभावात् तदानीमेव विद्यानिष्पत्तौ तदुत्तरक्षणे मोक्षावश्यकतया अर्चिरादिगतेर्वैयर्थ्यप्रसङ्गादिति—वाच्यम्; उपासनस्य स्वजन्यार्चिरादिगतिजनितब्रह्मप्राप्तिमत्तासम्बन्धेन स्वस्वरूपाविर्भावरूपमोक्षं प्रति कारणतया उपासनस्य निष्पन्नत्वेऽपि तादृशकारणतावच्छेदकसम्बन्धसम्पादकतया गतिसार्थक्यात्, 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्या अर्चिरादिगतिजनितब्रह्मप्राप्तेर्व्यापारताबोधनेन स्वजन्यतादृशव्यापारवत्तासम्बन्धेन कारणताया अपि तादृशश्रुतिसम्मतत्वात्॥

न च—परं **जैमिनिर्मुख्यत्वादिति सूत्रश्रीभाष्ये** "यथा हि विद्योत्पत्तेः वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा तमेतं वेदानुवचनेनेत्यादिशास्त्रादवगम्यते, तथा निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते" इत्युक्तत्वात् देह-

वियोगकाले विद्याया निष्पत्त्यभावावगमादुक्तलक्षणया न विरोधपरिहार इति—वाच्यम्; तत्र विद्यानिष्पत्तिपदस्य विद्याव्यापारनिष्पत्तिपरत्वेनाविरोधात्। विद्यानिष्पत्तिपदस्य यथाश्रुतार्थपरत्वेऽपि न क्षतिः; नाभुक्तमिति शास्त्रस्य स्वाश्रयत्वस्वजन्यकर्माश्रयत्वान्यतरसम्बन्धेन भोगजनकत्वपरतया अश्लेषविनाशशास्त्रस्य च कर्मणां ब्रह्मविदि भोगजनकत्वाभावपरतया विरोधस्यैवाभावेन तन्न्यायानपेक्षणात्, विद्यया ब्रह्मविदि कर्मणां नाशेऽपि स्वजन्यकर्माश्रयत्वसम्बन्धेन तस्य सुहृत्सु द्विषत्सु च फलजनकत्वोपपत्तेः। तथा च तदधिगम इत्यत्र श्रीभाष्यम्—

'न च नाभुक्तं क्षीयते कर्मेत्यनेन शास्त्रेणास्य विरोधः; भिन्नविषयत्वात्। तद्धि कर्मणां फलजननसामर्थ्यद्राढिमाविषयं, एतत्तूत्पन्नाया विद्यायाः प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यं, उत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते ॥" —इत्यादिना ॥

**यत्तु न्यायसिद्धाञ्जने**—नाभुक्तं क्षीयते कर्मेत्यादिकं तु विद्याविहीनविषयम्—इत्युक्तं; तत्तु—न स्वमतानुरोधेन, किन्तु भास्करभाष्ये तथोक्तत्वात्तन्मतानुरोधेनेति न श्रीभाष्यविरोध इति बोध्यम् ॥ वस्तुतस्तु—विद्यानिष्ठविषये कर्मणां फलजनकत्वासम्भवे विद्याहीनतन्मित्रादौ स्वजन्यकर्माश्रयत्वसम्बन्धेन भोगजनकत्वपरं तादृशशास्त्रमिति न्यायसिद्धाञ्जनवाक्यार्थः। तथा च भाष्योक्तार्थस्यैव विशदीकरणान्न तद्विरोधः ॥

**अथ**—अत्रोत्सर्गापवादन्यायेन वा विषयभेदेन वा विरोधपरिहारो न युक्तः, नाभुक्तमिति शास्त्रे स्मृतित्वस्य श्रुतप्रकाशिकोक्तत्वेन श्रुतिस्मृत्योर्विरोधे श्रुत्या स्मृतिबाधस्यैव युक्तत्वात्। उक्तं हि

पूर्वकाण्डे—'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति ; प्रत्यक्ष-श्रुतिविरुद्धं स्मृतिवचनं अनपेक्षं अनादरणीयमित्यर्थः । ननु तादृशस्मृतेरपि स्मृतित्वहेतुना श्रुतिमूलकत्वानुमानादादरणीयत्वं स्यादित्यत्राह 'असति ह्यनुमानम्' इति ; असति प्रत्यक्षश्रुतिविरोधे हि स्मृतिमूलश्रुत्यनुमानमित्यर्थः । एवं चाश्लेषविनाशादिबोधकप्रत्यक्ष-श्रुतिविरोधेन नाभुक्तमिति स्मृतिमूलश्रुत्यनुमानासम्भवात्तादृशस्मृते-रप्रामाण्यमेव युक्तम्—इति चेन्न । विद्वदविद्वत्साधारण्येन प्रवृत्ताया-स्तादृशस्मृतेरश्लेषविनाशादिबोधकश्रुत्या विद्वद्विषये बाधेन विद्वद-विद्वदुभयसाधारणस्वसमानार्थकश्रुतिमूलकत्वानुमानासम्भवेऽप्यविद्वन्मा-त्रविषयकसमानार्थकश्रुतिमूलकत्वानुमानसम्भवात्तादृशस्मृतेरविद्वद्विषये प्रामाण्यस्य दुर्वारत्वात्, आत्मघटावनित्यावित्यनुमानस्य श्रुत्या आत्मांशे बाधेऽपि घटांशे प्रामाण्यस्य दर्शनात् । तथा चोक्तरीत्या बाधाङ्गीकारे स्मृतिगतकर्मपदस्याविद्वत्कृतकर्मणि लक्षणा समाश्रयणीया, श्रीभाष्योक्तनिर्वाहे च न लक्षणेति लाघवम् ॥

**नन्वेवं**—न चाधिकारिकमपि पतनानुमानात्तदयोगादिति सूत्रे स्मृत्या श्रुतिबाधाङ्गीकारो न युज्यते । तत्र हि स्त्रीसङ्गादिना भ्रष्टानां ब्रह्मचारिणां प्रायश्चित्तविधायिकायाः 'यो ब्रह्मचार्यवकिरेत् स तं गर्दभमालभेत' इति श्रुतेः—

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ॥"—

इति स्मृत्या—बाधाङ्गीकारात् । आधिकारिकं—अधिकारिविचाररूप-पूर्वकाण्डषष्ठाध्याये प्रतिपादितं श्रौतं प्रायश्चित्तं, नैष्ठिकानां भ्रष्टानां न सम्भवति ; कुतः? पतनानुमानात्—नैष्ठिकानां भ्रष्टानां पतनस्मृतेः, तस्य प्रायश्चित्तासम्भवात् ; अतोऽधिकारलक्षणोक्तं प्रायश्चित्तं न नैष्ठिकविषयं, किन्तूपकुर्वाणब्रह्मचारिविषयमिति तत्सूत्रार्थस्य भाष्यो-

क्तत्वात्। तैत्तिरीयक आरणे द्वितीयप्रश्नेऽपि प्रायश्चित्तमुक्तम्—'स एतां प्रायश्चित्तिं विदाञ्चकार, स देवः काश्यपो यो ब्रह्मचार्यवकिरेत्, अमावास्यायां रात्रीयामग्निं प्रणीयोपसमाधाय द्विराज्यस्योपघातं जुहोति' इत्यादिना। एवं च प्रायश्चित्तविधायकप्रत्यक्षश्रुतिबाधेन प्रायश्चित्ताभावस्मृतेः श्रुतिमूलकत्वानुमानायोगात् औदुम्बरी सर्वा वेष्टयितव्येति स्मृतेरिवाप्रामाण्यं वा प्रायश्चित्तगौरवाभिप्रायकत्वं वा युक्तम्—इतिचेन्न॥ ब्रह्मचारित्वसामानाधिकरण्येन प्रायश्चित्तप्रतिपादिकायाः श्रुतेस्तत्सामानाधिकरण्येन तदभावप्रतिपादकस्मृतौ बाधकत्वायोगात्, स्मृतेरबाधेन निर्वाहसम्भवे तद्बाधस्यान्याय्यत्वेन श्रुतेस्सामानाधिकरण्येन प्रायश्चित्तबोधपरत्वस्यैव युक्तत्वात्। न च—उपकुर्वाणब्रह्मचारिणः स्त्रीनियमातिक्रमस्योपपातकान्तर्भूतस्य प्रायश्चित्तमभिधाय उत्तरेषां चैतदविरोधीति स्मृत्या नैष्ठिकादिषु प्रायश्चित्तातिदेशात् तदनुरोधेन श्रुतेरप्यवच्छेदकावच्छेदेन प्रायश्चित्तबोधपरत्वावश्यकतया श्रुत्या स्मृतिबाधो दुर्वार इति—वाच्यम्; एवमपि श्रुतेः स्मृतिबाधकत्वायोगात्; निषिद्धकर्मणा हि भगवतस्त्रिविधो निग्रहो जायते—स्त्रीसङ्गादिना ब्रह्मचारी नरकानुभवभाग्भवेदित्येकः, वैदिककर्मस्वनधिकृतो भवेदिति द्वितीयः, स्त्रीसङ्गादिसजातीयनिन्दितकर्मसु रुचिमान् भवेदिति तृतीयः। तत्र त्रिविधनिग्रहविनाशकानि कानिचित्प्रायश्चित्तानि, कानिचिच्चान्यतमशक्तिविनाशकानि। अत्र प्रायश्चित्तविधायकश्रुत्या द्वितीयनिग्रहाभावप्रयोजकप्रायश्चित्ताभावपरस्मृतेर्न विरोधः; येन शुध्येदित्यनेन द्वितीयनिग्रहाभावरूपशुद्धिहेतुभूतप्रायश्चित्ताभावस्यैव स्मृत्या बोधनात्, स्मृतेः प्रायश्चित्तसामान्याभावपरत्वे येन शुध्येदित्यस्य व्यर्थतापत्तेः। प्रायश्चित्तसामान्यपरश्रुतेः प्रायश्चित्तविशेषाभावपरस्मृतौ च न बाधकत्वं; वह्निमत्ताज्ञानस्य महानसीयवह्न्यभाववत्ताबुद्धावप्रतिबन्धकत्वात्, प्रथमनिग्रहनिरासकप्रायश्चित्तपरतयाऽपि श्रुतेर्निर्वाहात्॥

न च–उक्तरीत्या श्रुतिबोधितस्य प्रायश्चित्तस्य नैष्ठिकेऽपि प्रवृत्त्यङ्गीकारे नचाधिकारिकमिति सूत्रस्य भाष्योक्तार्थोऽनुपपन्नः, किन्त्वाधिकारिकं द्वितीयनिग्रहाभावप्रयोजकं कर्माधिकारापादकं प्रायश्चित्तं न सम्भवतीत्येवार्थो युक्त इति–वाच्यम्; आधिकारिकपदस्य अधिकारिलक्षणोक्तमित्यर्थस्येवाधिकारापादकमित्यर्थस्यापि श्रीभाष्यसम्मतत्वात्। तथा च **बहिस्तूभयथाऽपीत्यत्र श्रीभाष्यम्**--

"यद्यपि कल्मषनिवर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते, तथाऽपि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न सम्भवति; 'प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा' इति स्मृतेरित्यर्थः ॥" —इति ॥

न च–उक्तार्थोऽपि 'न चाधिकारिकम्' इति सूत्र एव वक्तव्यमिति–वाच्यम्। तथा सति 'उपपूर्वमपीत्येके' इति सूत्रे करिष्यमाणाया उत्तरेषां चैतदविरोधीत्यतिदेशस्मृत्या प्रायश्चित्तसद्भावशङ्काया अनुपपत्तेः, अतः प्रथमतो यथाश्रुतार्थस्यैवाङ्गीकारात् ॥ न चैवमप्यविशेषप्रवृत्तश्रुतेस्स्मृत्या सङ्कोचलक्षणबाधाङ्गीकारो न युक्त इति वाच्यम्; स्मृतेर्विशेषविषयत्वरूपप्राबल्यसत्त्वेन तया श्रुतिसङ्कोचोपपत्तेः। न च–प्रमेयसिद्धेः प्रमाणाधीनत्वात् प्रमेयबलाबलस्य प्रथमावगतप्रमाणबलाबलापेक्षया दुर्बलत्वात् विशेषत्वरूपप्रमेयप्राबल्यमङ्गीकृत्य स्मृत्या श्रुतिबाधो न युक्त इति–वाच्यम्। प्रमाणानां हि न तमःप्रकाशयोरिव स्वरूपतो विरोधः, किन्तु प्रमेयविरोधनिबन्धनः। तथा च प्रमेयविरोधपर्यालोचनदशायामेव सामान्यत्वविशेषत्वादिरूपप्रमेयगतबलाबलेन शास्त्रार्थनिर्णयसम्भवेन तत्र प्रमाणबलाबलस्याकिञ्चित्करत्वात्। अत एव पूर्वतन्त्रे शिष्टाकोपाधिकरणे 'वेदं कृत्वाऽथवेदिं करोति' इति श्रुतेः पदार्थधर्मभूतक्रमबोध-

कत्वेन दुर्बलत्वात् क्षुतआचामेदिति पदार्थबोधकत्वेन प्रबलया स्मृत्या सङ्कोचः स्वीकृतः। उक्तं च वार्त्तिके—

"दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा।
तदा हि विपरीतत्वं शिष्टाकोपे यथोदितम्॥
अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥" —इति॥

उत्तरतन्त्रेऽप्यसन्दिग्धार्थत्वेन प्रबलया कपिलस्मृत्या सान्दिग्धार्थत्वेन दुर्बलानां वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यं न सम्भवतीत्याशङ्क्य, कपिलस्मृतेः प्रबलतरमन्वाद्यनेकस्मृतिविरुद्धत्वेन अप्रमाणत्वात् तया वेदान्तबाधो न युक्त इति स्मृत्यधिकरणे सिद्धान्तितम्॥

**एतदभिप्रेत्यैव सर्वार्थसिद्धौ**—'तन्मात्राणि भूतादौ लीयन्ते' इति श्रुत्यनुरोधात् पञ्चतन्मात्राणामपि तामसाहङ्कारादुत्पत्तिः। न च—अनेकपुराणेषु शब्दतन्मात्रस्यैकस्यैव तामसाहङ्कारादुत्पत्तिः। स्पर्शतन्मात्रादीनामाकाशादिभ्य उत्पत्तिरिति प्रतिपादनं विरुध्यत इति—वाच्यम्; श्रुतिविरुद्धस्मृतीनामप्रामाण्यात्—इत्याशङ्क्य; उपबृंहणरहितायाः श्रुतेरासतमान्योन्यसङ्कटितानेकोपबृंहणाविरोधे तदनुगुणं नेतव्यत्वात् पाशाधिकरणन्यायेन बहुवचनस्य निरर्थकत्वात् शब्दतन्मात्रस्यैकस्यैव तामसाहङ्कारादुत्पत्तिः—इति समाहितम्॥

अत एव च—"निर्गुणवाक्यानां सगुणवाक्यानां च विषयमपहतपाप्मेत्याद्यपिपास इत्यन्तेन हेयगुणान् प्रतिषिध्य सत्यकामस्सत्यसङ्कल्प इति ब्रह्मणः कल्याणगुणान् विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावात्"—इति **प्रथमसूत्रस्थश्रीभाष्यव्याख्या**नावसरे टीकायां—'साक्षी चेता केवलो निर्गुणश्च' इति गुणसामान्यनिषेधवत् गुणसामान्यविधानस्य श्रुतिषु क्वाप्यदर्शनात् 'वर्षायुतैर्यस्य

गुणा न शक्याः' 'स ते गुणानामयुतैकदेशं' 'नान्तं गुणानां गच्छन्ति' इत्यादिस्मृतिवचनाभिप्रायेण सगुणवाक्यानामित्युक्तमिति—व्याख्याय श्रुतिस्मृत्योरुत्सर्गापवादन्यायो दर्शितः। न च—श्वेताश्वतरे 'यः कालकालो गुणिसर्वविद्यः' इति गुणसामान्यविधायकश्रुतिसत्त्वात्तादृशश्रुत्यभावाभिधानमनुपपन्नमिति—वाच्यम्। द्रव्यमात्रसाधारणस्य गुणसामान्यस्याभिधानवैयर्थ्यात्तत्रत्येनिप्रत्ययस्य प्राशस्त्यपरतया गुणीत्यस्य प्रशस्तगुणवानित्यर्थकत्वेन गुणसामान्यार्थकत्वाभावात्। यद्वा—गुण्यते आवर्त्यते पुनःपुनराश्रितैरनुसन्धीयत इति गुणः। सौशील्यं—महतो मन्दैस्सह नीरन्ध्रेण संश्लेषरूपं, तद्वानित्यर्थः; 'वशी वदान्यो गुणवानृजुश्शुचिः' इति सौशील्याभिप्रायेणाभियुक्तैर्गुणशब्दप्रयोगात्, 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति विश्वकोशात्; एवमेव 'को न्वस्मिन् साम्प्रतं लोके गुणवान्' इत्यत्र **गोविन्दराजीये** व्याख्यातत्वाच्च। एवं च श्रुतिबाधितार्थे श्रुत्यन्तरस्येव स्मृतिबाधितेऽपि श्रुतेस्सङ्कोचः॥

अत एव श्रुतिसिद्धार्थे श्रुत्यन्तरस्येव स्मृतिसिद्धार्थेऽपि श्रुतेरनुवादित्वमेव पूर्वतन्त्रे मृताग्निहोत्राधिकरणे उत्तरतन्त्रे च कार्याख्यानादपूर्वमित्यत्रोक्तम्। **मृताग्निहोत्राधिकरणे** 'ये पुरोदञ्चो दर्भाः तान् दक्षिणाग्रान् स्तृणीयात्' इति श्रुतौ—ये पुरोदञ्चो दर्भाः ते उदञ्चः कार्या इत्येवं विधिवाचकपदाध्याहारेण उदक्त्वांशेऽपि विधायकत्वम्, उताग्रवन्ति प्रागग्राण्युदगग्राणि वेति स्मृतिप्राप्तस्योदगग्रत्वस्यानुवाद इति संशये; अपूर्वत्वाद्विधायकत्वमेव, यदाग्नेयोऽष्टाकपाल इत्यादाविव यच्छब्दस्य विधिकुण्ठकत्वाभावेन तत्कल्पनसम्भवादिति उदक्त्वञ्चापूर्वत्वादिति सूत्रेण **पूर्वपक्षं कृत्वा**; नोदगग्रत्वस्य विधिः, किन्तु स्मृतिप्राप्तस्यानुवादः, कुतः प्राप्तिः, अग्रवन्तीत्यादिस्मृतेरिति सतो वा लिङ्गदर्शनादिति सूत्रेण **सिद्धान्तितत्वात्**॥ एवं—'किं मे वासो

भविष्यति, आप इति होचुः, तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति' इति छान्दोग्ये श्रवणादपां प्राणवासस्त्वानुसन्धानं कर्तव्यमिति प्रतीयते । बृहदारण्यके—काण्वशाखायां 'किं वासः' इतिप्रश्नस्य 'आपो वासः' इत्युत्तरमुक्त्वा 'तद्विद्वांसः श्रोत्रिया अशिष्यन्तः आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' इति वाक्ये अनमनग्नं कुर्वन्त इति वाक्यश्रवणाद्वासस्त्वचिन्तनमपि कर्तव्यमिति प्रतीयते । आचामन्तीत्याचमनविधिरपि माध्यन्दिनशाखायां 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेत्, एतमेव तदनमनग्नं कुरुते' इत्यनग्नत्वचिन्तनाद्वासस्त्वचिन्तनविधिरपि प्रतीयते । आचमने च विधिप्रत्ययश्रवणादाचमनविधिः स्पष्टं प्रतीयते । तत्र द्वयोर्विधेयत्वे वाक्यभेदापत्तेरेकस्यैव विधेयत्वे वक्तव्ये विधिकल्पनप्रयुक्तगौरवाभावात् आचमनस्यैव विधिः, वासस्त्वादिचिन्तनं तु कथञ्चित्स्तुतिरूपतया नेतव्यमिति—पूर्वपक्षे आचमनस्य भोजनाङ्गस्य स्मृत्याचारप्राप्तत्वेन विधेयत्वा सम्भवादाचमनान्तरस्य च विधाने गौरवात्प्राणवासस्त्वानुसन्धानमेव विधेयमिति—**सिद्धान्तस्य** कार्याख्यानादपूर्वमिति सूत्रसिद्धत्वात्; स्मृतिप्राप्तेऽपि श्रुतेः प्रामाण्ये तादृशसिद्धान्तभङ्गात्, भोजनाङ्गस्यैवाचमनस्य विधेयतासम्भवेन गौरवाभावात् ॥

न च—स्मृतिप्राप्ते श्रुतेरनुवादित्वेऽपि तादृशसिद्धान्तभङ्गो दुर्वारः, आचमनान्तरविधान इव प्राणवासस्त्वानुसन्धानविधानेऽपि गौरवस्य तुल्यत्वाद्विधिकल्पनाप्रयुक्तगौरवस्य सिद्धान्ते अधिकत्वादिति—वाच्यम् । प्राणवासस्त्वानुसन्धानस्य विधेयत्वाभावे छान्दोग्ये—अद्भिः परिदधतीत्यस्यानन्तरं 'लम्भुको ह वासो भवत्यनग्नो भवति' इत्यर्थवादस्यानुपपत्तेः, प्राणवासस्त्वानुसन्धानस्यैव वासोलाभानग्नत्वप्राप्त्योस्तत्क्रतुन्यायेन फलतया पूर्ववाक्यस्य तद्विधिपरत्वावश्यकत्वात्;

वासो लम्भुको भवति—वासो लब्धा भवतीत्यर्थात्, छान्दोग्ये आत्र-मनस्यैवानुक्तेः, प्राणवासस्त्वानुसन्धानस्य च शाखात्रयानुगतत्वेन विधेयताया युक्तत्वात्; पूर्वसन्दर्भे—किं मे अन्नं भविष्यति, आश्वभ्य आशकुनिभ्य आकीटपतङ्गेभ्यस्तत्तेऽ...ि.ि—तत्तत्प्राण्यदनीये वस्तुनि प्राणाप्यायकभूते प्राणान्नत्वदृष्टिविधिसत्त्वात् तत्साहचर्यादपि वास-स्त्वदृष्टिविधेर्याह्यत्वाच्च। इदमपि हेतुत्रयं कार्याख्यानादिति सूत्रादेव लभ्यते; कार्याख्यानादित्यस्य वासस्त्वानुसन्धानकार्यस्य वासोलाभ-स्याभिधानादित्यप्यर्थात्, समन्तादभिधानवाचिना आख्यानादित्य-नेन शाखात्रयानुगतिलाभात्, अपूर्वमित्यस्य पूर्वसन्दर्भगतदृष्टिविधि-सजातीयमित्यप्यर्थात्, नञस्साहश्यार्थकत्वादिति बोध्यम्॥

**ननु**—

उक्तरीत्या स्मृतिप्राप्तार्थे श्रुतेः प्रामाण्याभावे सदेव सोम्येदमग्र आसीदित्यनेन विहितबृहदबृहत्साधारणप्रमाविषयत्वरूपसत्त्वविशिष्ट-कारणानुवादेन ब्रह्म वा इदमित्यनेन बृहत्त्वस्य चेतनाचेतनसाधारण-तादृशबृहत्त्वावच्छिन्ने च, आत्मा वा इदमित्यनेनात्मत्वस्यजीवपर-साधारणतादृशात्मत्वावच्छिन्ने च, एको ह वै नारायण आसीदित्यनेन नारायणत्वस्य च विधिरिति सिद्धान्तो विरुध्यते॥

"आसीदेको ह वै चात्र विष्णुर्नारायणोऽव्ययः।
न ब्रह्मा न च रुद्रश्च न देवा न महर्षयः॥
न इमे द्यावापृथिवी न सोमो न च भास्करः।
न नक्षत्राणि लोकाश्च न चाण्डं महदावृतम्॥"—

इत्यनेन पाद्मपुराणगतद्वात्रिंशाध्यायगतोपबृंहणेनात्मत्वविशिष्टे कारणे नारायणत्वस्य प्राप्तत्वात्, अत्रत्यविष्णुपदस्य आत्मपरत्वात्, आप्नो-तीत्यात्मेति शरीरप्रतिसम्बन्ध्यर्थकात्मपदस्थाने व्याप्त्यर्थकविष्णु-पदस्य प्रयोगात्; अन्यथा विष्णुशब्दस्य एको ह वा इति श्रुत्यु-

पबृंहणत्वानुपयुक्ततया वैयर्थ्यापत्तेः । एवं—

"एको नारायणो देवः पूर्वसृष्टं स्वमायया ।
संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥
एक एवाद्वितीयोऽभूदात्माधारो निराश्रयः ।"—

इति भागवतैकादशस्कन्धनवमाध्यायगतोपबृंहणेनात्मन्येव नारायणत्वस्य प्राप्तत्वाच्च । महाभारते—

"पुरा तु प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ॥
आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः ॥"—

इति वचनेन तिष्ठतीति सदेवेतिवाक्यप्राप्तां सत्तां, महानिति ब्रह्मवेतिवाक्यप्राप्तं महत्त्वं, विश्वात्मेति आत्मावा इदमितिवाक्यप्राप्तमात्मत्वं चानूद्य पुरोवादावगतयावद्धर्मविशिष्टे 'स तु नारायणः प्रभुः' इति नारायणत्वस्य विधानेन प्राप्तत्वाच्च ॥ न च—उक्तश्रुतेर्निरुक्ताङ्क्षाबोधकत्वरूपं विधायकत्वं नास्ति, किन्तु नारायणत्वगतविधेयताख्यविषयताशालिबोधजनकत्वरूपं गौणं विधायकत्वमिति नानुपपत्तिरिति—वाच्यम् ; निरुक्ताङ्क्षाविधायकत्वरूपविधेयत्वस्येव विधेयताख्यविषयताया अप्यप्राप्तार्थ एव सम्भवात् । अत एव प्रथमसूत्रभाष्ये तत्त्वमसीत्यादौ त्वंपदार्थे श्वेतकेतुशरीरके अभेदेन ब्रह्मप्रकारकबोध एव स्वीकृतो न तु तद्विधेयको बोधः ; ऐतदात्म्यमिदं सर्वमिति पूर्ववाक्येनैव सर्वशरीरके ब्रह्मणस्तादात्म्येन प्राप्तत्वात् । तथा च भाष्यं—"तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः कथमिति चेत् नात्र किञ्चिदुद्दिश्य किमपि विधीयते, ऐतदात्म्यमित्यनेनैव प्राप्तत्वात् ॥"
—इति ॥ —इति चेन्न ॥

स्वोपजीविस्मृतिप्राप्तार्थे श्रुतेर्विधायकत्वस्य स्वानुपजीविस्मृतिप्राप्तार्थे अनुवादित्वस्य च स्वीकारेण विरोधविरहात् । आसीदेको ह वा इत्यादिस्मृतेरेको ह वै नारायण इति श्रुत्युपबृंहणत्वेन स्वोपजीवितया तत्प्राप्तेऽपि श्रुतेः प्रामाण्यात्, मृताग्निहोत्राधिकरणे श्रुतेरग्निहोत्र-मात्रविषयतया स्मृतेश्चाविशेषेण प्रवृत्त्या मिथो मूलमूलिभावायोगात् कार्याख्यानादित्यत्र कर्मसामान्याङ्गाचमनविधायकस्मृतेर्भोजनमात्राङ्गा-चमनविधायकश्रुतिमूलकत्वाभावादुक्ताचमनयोस्स्वानुपजीविस्मृतिप्राप्त-त्वेन तत्र श्रुतेरनुवादिताया युक्तत्वात् । आप्ताभिप्रायरूपविध्यर्था-न्वयबोधे च स्वानुपजीविमानान्तरजन्यबोधीयाप्ताभिप्रायनिष्ठप्रकारता-निरूपितविशेष्यताशून्यत्वरूपाप्राप्तत्वमेव नियामकम् । तेन स क्रतुं कुर्वीतेत्यादौ उपासनकृतावबाधितस्यापि तस्य नान्वयबोधः, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यनेन तादृशोपासनकृतेः प्राप्तत्वेन तत्र कुर्वीतेति लिङर्थान्वये तात्पर्यविरहात् । परं तु तत्र 'मनोमयः प्राणशरीरो भारूपः' इत्यारभ्य 'एतमितः प्रेत्याभिसम्भवि-तास्मीति' इतीतिशब्दान्तवाक्यप्रतिपाद्ये मनोमयत्वादिप्रकारकत्व एव कुर्वीतेति विध्यर्थान्वयः ॥

यद्यपि—तत्र मनोमयत्वादिप्रकारकत्वविशिष्टोपासनकृतावेव तद-न्वयः पतीयते । तथाऽपि—सविशेषणे हीति न्यायेन तादृशप्रकारकत्व एव तदन्वयः । स क्रतुं कुर्वीतेत्यस्यार्थवादे 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इत्यत्र क्रतुविधिसिद्धवत्कारेण प्रकारस्तुत्या क्रतुवाक्यस्य प्रकारविधितात्पर्यावगमात् तादृशन्याय-प्रविष्टबाधपदस्य तात्पर्याविषयत्वपरतया प्रकृतेऽपि विशेष्ये बाधस्य सत्त्वात् ॥

न च—तत्र विशेषणेऽपि न विध्यर्थान्वयसम्भवः, सर्वं खल्विदं ब्रह्मेति पूर्ववाक्ये सर्वशरीरकत्वप्रकारकत्वविशिष्टब्रह्मोपासनस्य प्राप्त-

त्वेन गुणान्तरप्रकारकत्वेऽप्याकाङ्क्षाविरहेण तत्रापि तात्पर्यायोगात्; सर्वं खल्विदं ब्रह्मेत्यस्य शान्तिशेषतया प्रथमान्तत्वेऽप्युपासेस्सकर्मकत्वात्कर्माकाङ्क्षायां पूर्वोपस्थितब्रह्मण एव कर्मतयाऽन्वयस्य वाच्यतया उपस्थित्यविशेषेण सार्वात्म्यस्यापि तत्र विधेयत्वावश्यकत्वात्, उत्पत्तिशिष्टगुणावरुद्धे गुणान्तरविधानासम्भवस्य वक्ष्यमाणत्वादिति—वाच्यम्; उपासेः कर्माकाङ्क्षानिवृत्तये ब्रह्मपदस्य विभक्तिपरिणामेन लाघवादनुषङ्गेऽपि सर्वमित्यस्य तथाऽनुषङ्गे मानाभावात् सार्वात्म्यस्योत्पत्तिशिष्टत्वाभावात्। तदेतदभिप्रेत्य टीकायामुक्तम्—

> "ननु—उपासनविधेरुत्पत्तिशिष्टसर्वात्मकत्वगुणावरोधान्मनोमयत्वादीनां नोपास्याकारत्वम्—इति चेन्न। सर्वात्मकत्वस्य उपासनविधिवाक्यस्थत्वाभावात्" —इति॥

विधेयताख्यविषयतारूपविधेयत्वे च स्वानुपजीविमानान्तरजन्यबोधीयविधेयताशून्यत्वमेव नियामकम्। अतस्तत्त्वमसीत्यादौ तत्पदार्थे न विधेयता, ऐतदात्म्यमिदं सर्वमित्यनेनैव प्राप्तत्वात्; किन्तु प्रकारत्वमात्रमिति॥

न चैवं—पुरोवादवाक्यावगतसत्त्वादिविशिष्टकारणे यतोवेत्यादिवाक्येन निरतिशयबृहत्त्वस्य विधानमिति सिद्धान्तो विरुध्यते, 'ब्रह्म वा इदमग्र आसीत्' इत्यनेनैव तस्य विहितत्वादिति—वाच्यम्; तत्रत्यब्रह्मशब्दस्य केवलबृहत्त्वाश्रयमात्रपरत्वात् निरतिशयबृहत्त्वाश्रयपरत्वाभावात्, उक्तार्थाभिप्रायेणैव जन्माद्यधिकरणटीकायां बृहत्त्वमात्रं पूर्वप्रतिपन्नाकार इत्युक्तम्॥ न च—तादृशसिद्धान्तोऽनुपपन्नः, अन्वयानुपपत्तितात्पर्यानुपपत्त्योरभावेऽपि 'ब्रह्म वा' इति श्रुतिघटकस्य निरतिशयबृहत्त्वाश्रयवाचिनो ब्रह्मशब्दस्य केवलबृहत्त्वाश्रये लक्षणाङ्गीकारादिति—वाच्यम्; विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वस्य

'स कीचकैर्मारुतपूर्णरन्ध्रैः' इत्यादौ मारुतपूर्णरन्ध्रत्वविशिष्टवेणुबोधक-कीचकपदे दृष्टत्वादत्रापि यतोवेत्यादिवाक्ये निरतिशयत्वविशिष्ट-बृहत्त्ववाचिपदान्तरसत्त्वेन 'ब्रह्म वा' इतिवाक्यगतब्रह्मशब्दे विशेष्य-मात्रलक्षकत्वस्य युक्तत्वात्, तन्नचायस्यैकवाक्यस्थविशेषणविशेष्य-वाचिपदद्वयविषयत्वेऽपि यतोवेत्यादिवाक्यस्य कारणवाक्यप्रतिपन्ने ब्रह्मत्वविधायकत्वेन परस्परसाकाङ्क्षतया तदेकवाक्यत्वात्, परस्पर-साकाङ्क्षत्वे एकोपनिषद्गतयोरिव भिन्नोपनिषद्गतयोरपि वाक्ययोरेक-वाक्यत्वस्य युक्तत्वात् ॥

**अत एव परैस्सर्ववेदान्तप्रत्ययाधिकरणगते "दर्शयति च" इति सूत्रे**—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इति छान्दोग्यवाक्ये एवंशब्दो न पूर्वोक्तप्रकारपरः, पूर्वं प्रादेशमात्रत्वस्यानुपपादनात्; किन्तु वाजसनेयकोक्तमूर्धचुबुकान्तरालभ्यप्रादेशमात्रत्वपरः; वाज-सनेयके—

"प्रादेशमात्रमिह वै देवास्सुविदिता अभिसम्पन्नास्तथा तु व एनान् वक्ष्यामि यथा प्रादेशमात्रमभिसम्पादयिष्यामि, स होवाच मूर्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानर इति, चक्षुषी उपदि-शन्नुवाच--एष वै सुतेजा वैश्वानर इति, नासिके उपदिशन्नुवाच—एष वै पृथग्वर्त्मा वैश्वानर इति, मुख्यमाकाशमुपदिशन्नुवाच—एष वै बहुलो वैश्वानर इति, मुख्या आप उपदिशन्नुवाच—एष वै रयिर्वैश्वानर इति, चुबुकमुपदिशन्नुवाच—एष वै प्रतिष्ठा वैश्वानर इति"—

इति मूर्धचुबुकान्तरालवृत्तित्वेन प्रादेशमात्रत्वोपपादनात्—इत्युक्तम् ॥ मुख्यमाकाशं—मुखगतमाकाशं, मुख्या आपः—मुखगता आप इत्यर्थः ॥

**तथा 'सर्वाभेदादन्यत्रेमे' इत्यधिकरणे**—कौषीतकीद्वितीया-ध्यायगतां 'अथातो निश्श्रेयसादानमेता ह वै देवता अहँ श्रेयसे

विवदमानाः' इत्यादिना प्राणस्य श्रैष्ठ्यमुपपाद्य; 'अथो य एवं विद्वान्' इत्यादिना प्राणोपासकस्य फलप्रतिपादिकां प्राणविद्यामुदाहृत्य; तत्रै-वंशब्दस्य पूर्वनिर्दिष्टपरामर्शकत्वात्तद्विद्यायां श्रैष्ठ्यमात्रस्यान्वयेऽपि न शाखान्तरोक्तानां वसिष्ठत्वादीनामन्वयसम्भवः, तथा सत्येवंशब्दप्रति-पादितस्य तन्मात्रगुणकत्वस्य हानिस्स्यात्, अश्रुतानां च गुणान्तराणां कल्पना स्यात्—इति पूर्वपक्षं कृत्वा; एवंशब्दो हि न पूर्वनिर्दिष्टमात्र-परामर्शकः, किं तु एवंशब्दस्योपस्थितपरामर्शकत्वाच्छाखान्तरीय-वसिष्ठत्वादीनामपि गुणद्वारोपस्थितत्वात्तेषामपि परामर्शोपपत्तिः; यथा देवदत्तश्शौर्यादिगुणवत्त्वेन स्वदेशे प्रसिद्धो देशान्तरेऽपि परिचय-विशेषात्तत्तद्गुणवत्त्वेन विभाव्यते, तथेहापि प्राणसंवादादिसारूप्यस्या-भेदेन प्राणविज्ञानस्यैकत्वेनैकप्रधानसम्बन्धात्तेऽपि गुणा उपास्या एव—इति **परैरुक्तम्**। तथा च भिन्नशाखास्थानामप्येकप्रकरणगताना-मेकवाक्यत्वं परेषामनुमतम् ॥

यद्यपि—यस्त्वेतमेवमिति छान्दोग्यगतैवंशब्देन वाजसनेयकोक्त-मूर्धचुबुकान्तरालवृत्तित्वलभ्यप्रादेशपरिमितत्वस्य परामर्शो न श्रीभा-ष्यसम्मतः; प्रादेशशब्दपूर्ववाक्यनिर्दिष्टद्युप्रभृतिप्रदेशसम्बन्धित्वरूप-यौगिकार्थस्यैव स्वीकारात्, एवंशब्दस्य शाखान्तरोक्तप्रकारपरत्वा-पेक्षया प्रादेशशब्दरूढित्यागस्योचितत्वात्। उक्तं च सर्ववेदान्तप्रत्य-याधिकरणटीकायां—'यस्त्वेतमिति न वाजसनेयकोक्तानुवादः, स्वशा-खावाक्य एव पूर्वप्रतिपादितस्यानुवादेन फलसमर्पकत्वसम्भवात्' इति। तथाऽपि—प्राणविद्यागतैवंशब्देन शाखान्तरोक्तपरामर्श आचा-र्यानुमत एव ॥

यद्यपि—श्रीभाष्ये सर्वाभेदाधिकरणे 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' इत्यादिकया छान्दोग्यवाजसनेयकरीत्या प्रवृत्ता कौषीतकीनव-माध्यायगता प्राणविद्यैवोदाहृता, न द्वितीयाध्यायगता। तथाऽपि—

टीकायां द्वितीयाध्यायगतप्राणविद्यायामप्यैक्यस्योपपादितत्वात् छान्दोग्यादिगतगुणपरामर्शकत्वमेवंशब्दस्य टीकाकृतामनुमतमेव ॥

न चैवं—देवदत्तगुणप्रसिद्धिदृष्टान्तश्चातिप्रसङ्गादनादृत इति तन्मते दूषणाभिधानं टीकाकृतां विरुध्यत इति—वाच्यम्; गुणिद्वारोपस्थितानां गुणानामन्यत्र परामर्शाङ्गीकारे ब्रह्मद्वारा विद्यान्तरीयगुणानामुपस्थितानां विद्यान्तरे परामर्शप्रसङ्ग इति दूषणाभिधानेऽपि तदेकवाक्यतापन्नशाखान्तरोक्तगुणानां शाखान्तरे परामर्शाङ्गीकारे दूषणानभिधानात्तस्येष्टत्वेऽपि विरोधाभावात्। अत एव—'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' इति मार्गमभिधाय; 'य एवंवित्पर्यङ्कं पादेनाध्यारोहति' इत्यादिकायां कौषीतकीगतपर्यङ्कविद्यायामेवंपदेन छान्दोग्याद्युक्तार्चिरादिमार्गस्यैव परामर्शः, न तु पूर्वनिर्दिष्टाग्निलोकादिमार्गस्य, तादृशस्य मार्गान्तरस्याभावादित्युक्तं—यावदधिकारमवस्थितिरित्यत्र टीकायाम् ॥ न च—छान्दोग्ये अर्चिरादिका कौषीतकीवाक्ये अग्निलोकादिका बृहदारण्यकेऽप्यर्चिरादिका तत्रैव वाय्वादिका मुण्डके सूर्यादिका च गतिश्श्रूयते; मन्त्रवर्णेऽपि 'ये चत्वारः पथयो देवयानाः' इति देवयानस्य चातुर्विध्यं श्रूयते, तथा च कौषीतकीगतेनैवंशब्देनाग्निलोकादिमार्गस्य परामर्शेऽपि नानुपपत्तिरिति—वाच्यम्; तथा सति चतुर्विधमार्गचिन्तनस्यापि विद्याङ्गत्वावश्यकतया परस्परं व्यभिचारापत्तेः ॥ न च—यादृशविद्यासन्निधाने यादृशो मार्गश्श्रूयते तादृशविद्यायां तादृशमार्गचिन्तनस्याङ्गत्वाङ्गीकारान्न व्यभिचार इति—वाच्यम्; **छान्दोग्ये पञ्चाग्निविद्यायां**—

"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्

षडुदङ्ङेति मासांस्तान् मासेभ्यस्संवत्सरं संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति ॥"—

इत्यर्चिरहश्शुक्लपक्षोत्तरायणसंवत्सरादित्यचन्द्रामानवघटितमार्गस्य,

**वाजिनां पञ्चाग्निविद्यायां—**

"य एवमेतद्विदुर्ये चेमेरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासान् मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तत्पुरुषोऽमानवस्स एत्य ब्रह्मलोकान् गमयति ॥"—

इति अर्चिरहश्शुक्लपक्षोत्तरायणदेवलोकादित्यामानवघटितमार्गस्य च पाठेन द्विविधमार्गचिन्तनस्यापि पञ्चाग्निविद्याङ्गत्वाऽपत्त्या व्यभिचारस्य दुर्वारत्वात्; 'तद्य इत्थं विदुः' इति पञ्चाग्निविद्यानिष्ठान् 'ये चेमेरण्ये श्रद्धा तप इत्युपासते' इति श्रद्धापूर्वकब्रह्मोपासकांश्चोक्त्वा तदुभयविधानामपि तादृशमार्गोक्त्या ब्रह्मविद्यासामान्य एव द्विविधमार्गचिन्तनस्य कारणतया सर्वत्र व्यभिचारापत्तेः ॥

एवं कौषीतकीगतपर्यङ्कविद्यायां 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' इत्याद्युक्ताग्निलोकादिमार्गस्येव द्विविधार्चिरादिमार्गस्यापि श्रद्धापूर्वकब्रह्मोपासनत्वाविशेषेण प्राप्त्या त्रयाणां व्यभिचारस्यापत्तेः ॥ न च—यत्र विद्यायां मार्गो न श्रुतः तत्र ये चेमेरण्य इत्यनेन प्राप्तमार्गद्वयचिन्तनस्याव्यवहितोत्तरत्वं निवेश्य कारणताद्वयं, पञ्चाग्निविद्यादावपि यत्र मार्गद्वयं श्रुतं तत्रापि तथा कारणताद्वयं, यत्रोपकोसलविद्यायां छान्दोग्यगतपञ्चाग्निविद्यारीत्या एको मार्गश्श्रुतः तत्राप्युक्तरीत्या कारणताद्वयं, यत्र पर्यङ्कविद्यादौ

मार्गत्रयं श्रुतं तत्र मार्गत्रयचिन्तनस्य कारणतात्रयमिति कल्पनान्न व्यभिचार इति—वाच्यम्; तथा सति कार्यकारणभावबाहुल्यापत्तेः, मार्गविधायकविद्यावाक्यानां भिन्नशाखागतानामप्येकवाक्यत्वं स्वीकृत्य एकविधमार्गविधायकस्यैव कल्पयितुं युक्तत्वात्, अग्न्यादित्ययोस्सर्वत्र प्रत्यभिज्ञानेन मार्गैकत्वाश्रयणं न्याय्यमित्यस्यार्चिरादिना तत्प्रथितेरित्यधिकरणसिद्धत्वात्, असति बाधके लाघवतर्कसहकृतप्रत्यभिज्ञानस्यैक्यसाधकत्वात्; सर्वब्रह्मविद्यानां ब्रह्मरूपैकार्थप्रत्यभिज्ञानैक्यापत्तिवारणायासति बाधक इति; तत्र गुणानन्त्यादुपसंहारासम्भवस्य बाधकत्वात्, अत्र मार्गान्वयिनां पदार्थानां द्वादशसङ्ख्यावत्त्वेन चिन्तनयोग्यत्वान्मार्गैक्ये बाधकाभावात्। ये चत्वार इति मन्त्रवर्णस्तु चातुराश्रम्याभिप्रायो वा ऐष्टिकपाशुकसौमिकदार्वीहौमिकगत्यभिप्रायो वा भवतीति न मार्गचतुष्टयसाधकः—इत्यर्चिराद्यधिकरणटीकायामुक्तम्। तथा च—परेषामिव टीकाकृतामप्येकप्रकरणगतानां भिन्नशाखास्थवाक्यानामेकवाक्यत्वमनुमतं; व्यवस्थापितं च भिन्नशाखास्थवाक्यानामप्येकवाक्यत्वं 'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत्तदुक्तम्' इत्यधिकरणे सूत्रकृता। तत्र हि—कुशा वानस्पत्या इति काळापिश्रुतिवाक्यस्य महावृक्षजन्यत्वरूपसामान्याकारेण स्तोत्रगणनार्थसमिच्छलाकाबोधकस्य औदुम्बर्यः कुशा इति शाट्यायनिवाक्येन उदुम्बरजन्यत्वरूपविशेषाकारेण तादृशशलाकाबोधकेन यथैकवाक्यता; यथा वा—'देवासुराणां छन्दोभिस्स्तुवते' इत्यविशेषेण छन्दस्स्तुतिविधायकवाक्यस्य देवच्छन्दाँसि पूर्वाणीति पैङ्गश्रुतिवाक्येन पौर्वापर्यबोधकेनैकवाक्यता; यथा च 'हिरण्येन षोडशिनस्स्तोत्रमुपाकरोति' इति छन्दोगवाक्यस्य कालविशेषाबोधकस्य 'समयाविषिते सूर्ये षोडशिनस्स्तोत्रमुपाकरोति'

इति कालबोधकतैत्तरीयकवाक्येनैकवाक्यता, षोडशिनः—पात्रविशेषस्य, स्तोत्रं—गानविशेषविशिष्टोच्चारणं, समयाविषिते—अर्धास्तमिते, उपाकरोति—आरभत इत्यर्थः; अध्ययनारम्भरूपे उपाकर्मण्यप्युपाकरणशब्दप्रयोगेन तादृशधातोरारम्भार्थकतासिद्धेः। यथा चर्त्विज उपगायन्तीत्युत्सर्गवाक्यस्य नाध्वर्युरुपगायेदित्यपवादवाक्येनैकवाक्यता; तथा 'अश्व इव रोमाणि विधूय पापं' इति छन्दोगवाक्यस्य 'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्याथर्वणवाक्यस्य च केवलकर्मनाशप्रतिपादकस्य 'तस्य पुत्रा दायमुपयन्ति, सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्यां' इति शाट्यायनिवाक्येन नष्टकर्मणामन्यत्रसङ्क्रमणरूपोपयोगबोधकेनैकवाक्यत्वमिति स्थापितम् ॥

न च—उक्तदृष्टान्तचतुष्टयेऽप्येकवाक्यत्वानङ्गीकारे क्षतिविरह इति—वाच्यम्; तथा सति वानस्पत्या इति वनस्पति शब्दार्थसङ्कोचेन वनस्पतिसामान्यसम्बन्धिशलाकानामौदुम्बरशलाकानां च विकल्पापत्तेः। एवं दृष्टान्तान्तरेऽपि विकल्पापत्तिरूह्या; एकवाक्यत्वाङ्गीकारे च वानस्पत्यपदार्थे औदुम्बरस्याभेदेनान्वयेन सङ्कोचाद्विकल्पापत्त्यनवकाशात् ॥ न च—तादृशवाक्ययोरेकवाक्यत्वे कुशापदद्वयवैयर्थ्यमिति—वाच्यम्; तत्रैकस्योद्गातृसम्बन्धिस्तोत्रगणनार्थत्वावच्छिन्नरूपविशेषणमात्रपरत्वेनापरस्य च शलाकारूपविशेष्यमात्रपरत्वेन द्वयोरवैयर्थ्यात् ॥ न च—उक्तरीत्या प्रयासेनैकवाक्यत्वोपपादनं न सूत्रकाराद्यनुमतं, किन्त्वेकवाक्यस्यापरवाक्यं प्रति शेषत्वमेव; तदुपयुक्तार्थपरत्वरूपं तच्छेषत्वं च वाक्यभेदेऽपि निर्वहतीति—वाच्यम्; तादृशशेषशेषिभावस्य सङ्क्षिप्तविस्तृतग्रन्थभेदस्थले सर्वत्र दृष्टत्वेन तत्र विप्रतिपत्त्यभावेन दृष्टान्तचतुष्टयेन तत्साधनस्य विफलत्वात्, तदुक्तामिति दाशमिकपर्युदासाधिकरणोदाहरणस्य चानुपपत्तेः ॥

इत्थं हि तदधिकरणशरीरम्—

"चातुर्मास्येषु साकमेधेऽपि तृतीये पर्वणि श्रूयते—'नार्षेयं वृणीते न होतारं वृणीते'—इति। तथानारभ्य श्रूयते 'यजतिषु ये यजामहं करोति नानूयाजेषु' ॥" इति ॥

तत्र सन्देहः—किमतिदेशप्राप्तस्य वरणस्य नार्षेयमिति निषेधप्राप्ततत्प्रतिषेधस्य च विकल्पः, उत पितृयज्ञे वरणाननुष्ठानमेवेति; तथा अनूयाजेषु ये यजामह इति मन्त्रपाठतत्प्रतिषेधयोर्विकल्पः, उत मन्त्रपाठाननुष्ठानमेवेति। तत्र पूर्वपक्षः—उक्तस्थले पर्युदासाङ्गीकारे आर्षेयवरणाभिन्नं होतृवरणाभिन्नं प्रकृतिगतं पितृयज्ञे कर्तव्यमिति, अनूयाजभिन्नेषु यागेषु ये यजामह इति मन्त्रपाठं करोतीति चार्थस्स्यात्; तथा सति नञो भिन्ने लक्षणापत्तिः ॥ न च—नञो भेदार्थकत्वेऽपि नानुपपत्तिः, तस्याश्रयतासम्बन्धेनान्वयादेव विशिष्टलाभादिति—वाच्यम्; तथा सति तस्यापि प्रातिपदिकतया प्रातिपदिकार्थयोर्भेदेन नान्वय इति व्युत्पत्तौ निपातभेदनिवेशे गौरवेण तद्विरोधापत्तेः। अतो नञः क्रियान्वयरूपः प्रसज्यप्रतिषेध एव स्वीकर्तव्यः;

"प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्।
पर्युदासस्सविज्ञेयो यत्रोत्तरपदेन नञ् ॥"—

इत्युक्तत्वात्। तथा च वरणनिषेधो मन्त्रपाठनिषेधश्चार्थ इति विकल्प एव; चोदकेन पितृयज्ञेऽपि वरणस्य यजतिपदार्थसङ्कोचेन यजतिष्वित्यनेनानूयाजेष्वपि मन्त्रपाठस्य प्राप्तत्वात्, प्राप्तप्रतिषेधे षोडशिग्रहणाग्रहणयोरिव विकल्पस्य युक्तत्वात्। तथा च तदधिकरणे पूर्वपक्षसूत्रं—'प्रतिषेधः प्रादेशे चानारभ्यविधाने च प्राप्तप्रतिषेधत्वाद्विकल्पस्स्यात्'—इति। प्रादेशे चोदकेनातिदेशे सति श्रूयमाणे 'र्षेयवाक्ये, अनारभ्यविधाने येयजामहइतिवाक्ये श्रूयमाणे विशोजवाक्ये च प्रतिषेध एव नञर्थस्स्यात्; ततश्च प्राप्तप्रतिषेध-

त्वाद्विकल्प इति सूत्रार्थः। एवं प्राप्ते सिद्धान्तः—प्रतिषेधपरत्वपक्षेऽपि 'न वृणीते' 'न करोति' इति धात्वर्थवरणमन्त्रकरणयोरिष्टसाधनत्वाद्यभावस्य प्रातिपदिकार्थस्य भेदेनान्वयायोगादभाववति लक्षणा दुर्वारा; तथा च विकल्पस्याष्टदोषदुष्टस्यान्याय्यत्वात्पर्युदासपक्ष एव युक्त इति। तथा च सिद्धान्तसूत्रं—"अपि तु वाक्यशेषत्वादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यात्"—इति। विकल्पस्यान्याय्यत्वाद्ये यजामह इति विधेरेव नानूयाजवाक्यमेकदेशस्स्यात्, पर्युदासवृत्त्या विधिवाक्यैकवाक्यतापन्नत्वादिति सूत्रार्थः। एवं च पर्युदासाङ्गीकारादेकवाक्यत्वमेवेति। सूचितं चेदमधिकरणशरीरं श्रीभाष्ये—

> "सामान्येनावगतमर्थं विशेषे व्यवस्थापयितुं क्षमस्य वाक्यस्य तच्छेषत्वमनभ्युपगच्छद्भिस्तयोरर्थयोर्विकल्पस्समाश्रयितव्यः। स च सम्भवन्त्यां गतौ न युज्यते; तदुक्तं पूर्वस्मिन् काण्डे—अपि तु वाक्यशेषत्वादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यादिति ॥" —इति ॥

ननु—इदमधिकरणमयुक्तं, प्रसज्यप्रतिषेधपक्षेऽपि विकल्पाप्राप्तेः; विशेषनिषेधसहितसामान्यविधिस्थले विधिघटकसामान्यवाचिपदस्य विशेषातिरिक्तपरतायाः 'ब्राह्मणेभ्यो दधि दातव्यं कौण्डिन्याय न दातव्यं' इत्यादौ क्लृप्तत्वेन चोदकस्यार्षेयादिवरणातिरिक्तधर्मपरतायाः यजतिपदस्यानूयाजभिन्नयागपरतायाश्चावश्यकत्वात्। न च—ब्राह्मणेभ्यो दधिदातव्यमित्यादावपि कौण्डिन्यभेद एव नञा ब्राह्मणेषु प्रतीयत इति—वाच्यम्; अनुयोगिप्रतियोगिवाचकपदयोस्समानवचनकत्वाभावे तत्प्रतियोगिकभेदबोधनासम्भवात्, कौण्डिन्यपदस्य एकवचनान्तत्वेन बहुवचनान्तब्राह्मणपदसमानवचनकत्वाभावात्; अन्यथा—घटा न नील इत्यादावपि भेदबोधप्रसङ्गात्। न च—प्रतियोगिवाचकपदोत्तरविभक्त्या अनुयोगिवाचकपदोत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्ध-

सङ्ख्याया विवक्षितत्वे भिन्नवचनयोरपि प्रतियोग्यनुयोगिवाचिपदयो-स्साधुत्वं भवति, बौद्धाद्यागमा न प्रमाणमित्यादौ तथा दर्शनादिति-वाच्यम् ; कौण्डिन्यस्यानेकत्वेन तद्गतैकत्वसङ्ख्यायाः विवक्षणासम्भ-वात् । जातिगतैकत्वस्य परम्परयाऽन्वयसम्भवेन सङ्ख्यायाः विवक्षण-सम्भवेन भेदबोधसम्भवेऽपि न पर्युदासस्सम्भवति ; तथा सति द्वितीयस्य दातव्यमित्यस्यानन्वयप्रसङ्गात् । एवममावास्यायां पितृभ्यो दद्यादिति विधिनाऽमावास्यापदार्थासङ्कोचेन रात्रावपि प्राप्तस्य श्राद्धकरणस्य न रात्रौ श्राद्धं कुर्वीतेत्यनेन निषेधेऽपि न विकल्पप्रसक्तिः, तत्रापि विशेषनिषेधसत्त्वेन विधिघटकामावास्यापदस्य रात्रीतरपरताया आवश्यकत्वात् । न च तत्रापि रात्रिभेदस्यामावास्यायामन्वयमङ्गी-कृत्यैकवाक्यत्वमभ्युपगन्तुं युक्तं, तथा सति कुर्वीतेति क्रियापद-वैयर्थ्यात् । एवं च विधिनिषेधयोर्भिन्नवाक्यत्वेऽपि विशेषनिषेधसहित-सामान्यविधिस्थले क्लृप्तेन सामान्यवाचिपदस्य विशेषेतरपरत्वनियमेनैव प्रसज्यप्रतिषेधपक्षेऽपि विकल्पापत्त्यनवकाशात्तदर्थं पर्युदासमवलम्ब्यैक-वाक्यत्वकल्पनमनुचितम् । किं च पर्युदासाधिकरणानन्तरमविशेषेण—यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषशिष्टं स्यादि-त्यधिकरणे—यदाहवनीये जुहोतीति सामान्यशास्त्रस्य पदे जुहो-तीत्यनेन विकल्पः उत बाध इति—सन्देहे ; द्वयोरपि प्रत्यक्षशास्त्रत्वेन तुल्यबलत्वाद्विकल्प इति—पूर्वपक्षे ; पदशास्त्रस्य विशेषविषयत्वेन प्रबलत्वात्तेन सामान्यशास्त्रस्य पदहोमातिरिक्तहोमलाक्षणिकत्वरूप-सङ्कोचलक्षणो बाध इति—स्थापितम् । तन्न्यायेनात्रापि विशेषशास्त्रेण सामान्यशास्त्रस्य सङ्कोचेनोपपत्तौ एकवाक्यत्वमङ्गीकृत्य पर्युदासाधि-करणे विकल्पवारणमनुचितम्—इति **चेन्न** ॥

विधिनिषेधयोर्भिन्नवाक्यत्वेऽपि विशेषनिषेधसहितसामान्यविधि-स्थले क्लृप्तेन सामान्यवाचकपदस्य विशेषेतरपरत्वनियमेन विशेषनिषेध-

स्यैव वैयर्थ्यापत्तेः। अमावास्यायां पितृभ्यो दद्यादिति शास्त्रघटका-मावास्यापदस्य रात्रीतरामावास्यापरत्वेन रात्रौ श्राद्धस्यैवाप्रसक्त्या न रात्राविति निषेधवैयर्थ्यस्य दुर्वारत्वात् ॥ न च—तादृशनिषे-धाभावे अमावास्यापदस्य रात्रीतरामावास्यायां लक्षणैव न युज्यते, निषेधशास्त्रस्यैव तादृशलक्षणातात्पर्यग्राहकत्वान्न वैयर्थ्यमिति—वाच्यम्; निषेधवाक्यस्य लक्षणातात्पर्यग्राहकत्वेऽपि स्वार्थे तात्पर्या-भावेन वैयर्थ्यस्य दुष्परिहरत्वात्; अतो विशिष्टवाक्यस्य वैयर्थ्या-ङ्गीकारापेक्षया क्रियापदमात्रवैयर्थ्यमभ्युपगम्य न रात्रौ श्राद्धं कुर्वीतेत्यादावपि पर्युदासमवलम्ब्यैकवाक्यत्वाभ्युपगम एव युक्तः; तदभावे विकल्पापत्तिश्च युक्ता। न च—न रात्रावित्यस्यामावास्या-विध्येकवाक्यत्वे अष्टकादिश्राद्धविधेरसङ्कोचादष्टकादिश्राद्धस्य रात्रा-वप्यनुष्ठानप्रसङ्ग इति—वाच्यम्; अमावास्यादिश्राद्धविधायकवाक्यार्थ इवाष्टकादिविध्यर्थेऽपि न रात्रावित्यर्थस्य रात्रिभेदस्य प्रवेशासम्भवात्, भवन्मतेऽप्यमावास्याष्टकादिबोधकतत्तद्विधिस्थपदानां रात्रिभेदविशि-ष्टतत्तदर्थेषु लक्षणाया आवश्यकत्वेन तादृशलक्षणातात्पर्यग्रहार्थं तत्तद्विधिजन्यबोधात्पूर्वं निषेधवाक्योपस्थितेर्नियमत आवश्यकतया तत्कल्पनप्रयुक्तगौरवाभावात् ॥

**एतेन**—नार्षेयं वृणीते यजतिषु ये यजामहं करोतीत्यादा-वपि पदाहवनीयन्यायेन निर्वाहात् न्यायान्तरानुसरणं विफलमिति——**निरस्तम्;** पदाहवनीयस्थले सामान्यशास्त्रस्य विशेषेतरलाक्षणि-कत्वेऽपि पदशास्त्रस्य वैयर्थ्याभावात्पदशास्त्रस्य लक्षणातात्पर्यग्राह-कत्वेऽपि पदहोमविधानार्थं तादृशशास्त्रस्य स्वार्थेऽपि प्रामाण्यावश्य-कत्वात्; नानूयाजवाक्यस्य लक्षणातात्पर्यग्राहकत्वे वैयर्थ्यस्यैव प्रसङ्गेन विध्येकवाक्यत्वस्यैव युक्तत्वात्। एवं च—विशेषशास्त्रं यत्र विधिपरं तत्र सामान्यशास्त्रस्य विशेषातिरिक्तलक्षणायामपि न दोषः,

यत्र विशेषशास्त्रं केवलनिषेधमात्रपरं तत्र सामान्यशास्त्रे न लक्षणा; तथा सति विशेषशास्त्रस्यैव वैयर्थ्यप्रसङ्गात्। किं तु–सामान्यशास्त्र-घटकयागादौ विशेषशास्त्रसमर्पितानूयाजभेदादेरन्वयः। यत्र च सामान्य-शास्त्रं नाना विशेषशास्त्रं चैकं तत्रामावास्याष्टकादिशास्त्रेष्वपि विशे-षशास्त्रसमर्पितरात्रिभेदान्वयोऽगत्या स्वीक्रियते ॥

**वस्तुतस्तु**—रात्रौ श्राद्धं न कुर्वीतेत्यस्यामावास्याष्टकाद्यनेक-विध्येकवाक्यत्वस्यामावास्याद्यनेकपदानां रात्रिभिन्नामावास्यात्वादिना लक्षणायाश्च स्वीकारमपेक्ष्य निषेधवाक्य एव कालसामान्यबोधकसप्त-म्यन्ताध्याहारो युक्तः; तथा च नञः पर्युदासार्थकतया श्राद्ध-निमित्तभूतकालेषु रात्रिभिन्नत्वरूपविशेषणस्यैव विधिरयम्। एवं चैत-द्वाक्यात् रात्रिभिन्नकालत्वेन श्राद्धजन्यभगवदनुग्रहसामान्ये कालस्य हेतुत्वलाभेन रात्रिकृतश्राद्धे रात्रिभिन्नकालरूपकारणान्तराभावेन भगवदनुग्रहरूपफलानुपधानग्रहान्न रात्रौ श्राद्धकरणप्रसक्तिरिति विधि-निषेधयोरेकवाक्यत्वाभावेऽपि न विकल्पावकाशः ॥

न चैवं–हिरण्येन षोडशिनस्स्तोत्रमुपाकरोतीति वाक्यविहित-षोडशिस्तोत्रप्रारम्भजन्यानुग्रहे समयाविषित इति विशेषवाक्येनार्धा-स्तमयकालस्यापि कारणत्वबोधनेन तद्भिन्नकाले कृतस्य स्तोत्रस्य फलोपधायकत्वाभावान्न तद्भिन्नकाले स्तोत्रप्रसक्तिरिति विकल्पानव-काशात्तादृशवाक्ययोरेकवाक्यत्वाभ्युपगमो न युक्त इति–वाच्यम्। एकवाक्यत्वं हि द्विविधं–परस्परसाकाङ्क्षार्थप्रतिपादकत्वरूपमेकमुख्य-विशेष्यकबोधजनकत्वरूपं च। तत्र कुशादिदृष्टान्तत्रयं परस्परसाका-ङ्क्षार्थप्रतिपादकत्वरूपैकवाक्यत्वे, उपगानरूपचरमदृष्टान्तस्तु एकमुख्य-विशेष्यकबोधजनकत्वरूपैकवाक्यत्व इति न दोषः; कुशा वानस्पत्या इत्यत्र वनस्पतिविशेषाकाङ्क्षायाः स्तोत्रमुपाकरोतीत्यत्र कालविशेषाका-ङ्क्षया देवासुराणां छन्दोभिरित्यत्र क्रमविशेषाकाङ्क्षायाश्च सत्त्वेन तन्नि-

र्वतकैर्वाक्यैस्तेषां पृथगेकवाक्यत्वस्य युक्तत्वात्, ऋत्विज उपगायन्तीत्यत्र नाध्वर्युरित्यनेनाध्वर्युभेदस्यान्वयाङ्गीकारेण तत्र द्वितीयैकवाक्यत्वस्य सत्त्वात्, चतुर्थदृष्टान्तोपपादनायैव पर्युदासाधिकरणस्योदाहरणादिति न काचिदनुपपत्तिः ॥ न च—अश्व इव रोमाणीति छन्दोगवाक्यस्य तथाविद्वानित्याथर्वणवाक्यस्य च सुहृदस्साधुकृत्यामिति शाट्यायनिवाक्येन परस्परसाकाङ्क्षत्वरूपमेकवाक्यत्वमेव विवक्षितमिति दार्ष्टान्तिकानुरोधेन कुशादिदृष्टान्तत्रयोपादानस्य युक्तत्वेऽपि चतुर्थदृष्टान्तोपादानस्य तद्व्यवस्थापकपर्युदासाधिकरणोदाहरणस्य चानुपपत्तिरिति—वाच्यम्; न ह्यत्र भिन्नग्रन्थसाधारणपरस्परसाकाङ्क्षत्वसाधनमात्रेण चरितार्थता, तथा सति अश्व इव रोमाणि विधूयेति छान्दोग्योक्तधूननकर्तुस्तस्य पुत्रादायमिति शाट्यायनिगततच्छब्देन परामर्शानुपपत्तेः। एकग्रन्थे पूर्वनिर्दिष्टस्योत्तरतच्छब्देन परामर्शनेऽपि ग्रन्थान्तरनिर्दिष्टस्य परामर्शादर्शनादत एकग्रन्थत्वसाधनमप्यावश्यकं; तत्र भिन्नशाखागतवाक्ययोरेकग्रन्थत्वमयुक्तमिति शङ्कायां भिन्नशाखावाक्ययोरेकमुख्यविशेष्यकबोधजनकत्वरूपस्यैकग्रन्थत्वव्याप्यस्य चतुर्थदृष्टान्ते प्रदर्शनात्तेन भिन्नशाखावाक्ययोरेकग्रन्थत्वसिद्ध्या शाट्यायनिगततच्छब्देन छान्दोग्यादिनिर्दिष्टस्य परामर्शनिर्वाहः। एवं च भिन्नशाखावाक्ययोरेकग्रन्थत्वसाधनायैव चतुर्थदृष्टान्तस्य पर्युदासाधिकरणोदाहरणस्य च सार्थक्यमिति बोध्यम् ॥

यत्तु **पर्युदासाधिकरणशास्त्रदीपिकायां**—सामान्यविधिविशेषनिषेधयोरतुल्यबलत्वात्पदाहवनीयन्यायेन विशेषेण सामान्यस्य सङ्कोच एव युक्तो न विकल्पः—इत्याशङ्क्य; सामान्यशास्त्रेणाहवनीयप्राप्तेः प्रागेव विशेषशास्त्रेण पदस्य विहितत्वात्पश्चात्सामान्यद्वारा प्राप्तस्याहवनीयस्य विशेषशास्त्रेण बाधो युक्तः, अत्र तु निषे-

धस्य प्राप्तिसापेक्षत्वेनानूयाजेषु ये यजामहाप्राप्तेश्च प्रमाणान्तरेणा-सम्भवान्निर्दोषशास्त्रेणैव प्राप्तिर्वक्तव्या, निर्दोषशास्त्रप्राप्तस्य सर्वथा बाधे प्रापकशास्त्रस्याप्रामाण्यप्रसङ्गात्तत्प्रामाण्योपपत्तये विकल्प इति प्रतिषेधपक्षे विकल्पापादनं युक्तम्—इति समाहितम् ॥

अत्रोच्यते—निषेधस्य प्राप्तिसापेक्षत्वं नाम—अभावज्ञानसामान्यस्य समानधर्मिकप्रतियोगिज्ञानजन्यत्वं, तत्तु न युज्यते; प्रत्यक्ष एव प्रतियोग्यारोपस्य हेतुताया नैयायिकादिभिर्निरस्तत्वेन परोक्ष-ज्ञानसाधारणाभावज्ञानसामान्ये तद्धेतुतायास्सुतरामप्रामाणिकत्वात्; अन्यथा नान्तरिक्षेऽग्निश्च्योतव्य इति निषेधस्थलेऽपि प्रतियोगिप्रसक्ति-कल्पनापत्तेः। अस्तु वा—अभावज्ञानसामान्ये समानधर्मिकप्रतियोगि-ज्ञानस्य हेतुतारूपं निषेधस्य प्राप्तिसापेक्षत्वं, तादृशप्रतियोगिज्ञा-नस्य शास्त्रजन्यत्वावश्यकत्वेऽपि शास्त्रतात्पर्यविषयत्वानावश्यकत्वात्; अन्यथा 'अग्निहोत्रं प्रकृत्य श्रुतस्य जर्तिलयवाग्वा वा जुहुयाद्गवीधुक-यवाग्वा वा जुहुयात् न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाग्निहोत्रं जुहुयात्' इत्यस्य जर्तिलगवीधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोरग्निहोत्राहु-तिद्रव्यत्वविधानेऽपि तात्पर्यापत्त्या विकल्पापत्तेः। न चेष्टापत्तिः, तदनन्तरं जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात्तदेकवाक्यताया जर्ति-लयवाग्वा वा जुहुयादित्यादेर्ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हा अपि जर्तिलागवीधुकाश्च यदपेक्षया दुष्टास्तत्पयोऽत्यन्तं प्रश-स्तमिति जर्तिलादिवाक्यं पयोविध्येकवाक्यतानुरोधात्पयस्स्तुत्यर्थमिति न चेदन्यं प्रकल्पयेत्प्रक्लृप्तार्थवादस्स्यादिति दाशमिकाधिकरणे किञ्चि-द्विधिपूर्वकं तन्निन्दाया विध्यन्तरश्रवणे सति तदेकवाक्यतानुरोधात्पूर्व-प्रवृत्तयोर्विधिनिन्दयोस्तदर्थवादत्वमिति समर्थितम् ॥

एतं न्यायमवलम्ब्यैवोत्तरतन्त्रेऽपि भूम्नःक्रतुवज्ज्यायस्त्वमित्यधिकरणे वैश्वानरविद्यायां किं व्यस्तस्योपासनविधिरुत व्यस्तस्य समस्तस्य च उत समस्तस्यैवेति—**संशये** ; मूर्धादिव्यस्तोपासनेष्वौपमन्यवादिभिरुक्तेषु 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमात्मानं वैश्वानरमुपास्ते' इति व्यस्तोपासनेषु फलश्रवणाद्व्यस्तोपासनमेव प्रामाणिकं, 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमात्ति' इति च व्यस्तोपासनसमुदायानुवाद एव ; अथवा यस्त्वेतमेवमित्यादिना वाक्येन समस्तोपासनमपि विधीयते ; अतो द्वयमपि प्रामाणिकं, अल्पफलेच्छायां व्यस्तोपासनं अधिकफलेच्छायां तु समस्तोपासनं कर्तव्यमिति—**पूर्वपक्षे** । मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति व्यस्तोपासने निन्दाश्रवणात्समस्तोपासनमेव प्रामाणिकमिति—**समर्थितम्** ॥

न च—जर्तिलादिवाक्ये हिंसाभिश्रकर्मापेक्षया प्राशस्त्यबोधनाय जर्तिलादिविधेस्सार्थक्येऽपि अत्र व्यस्तोपासनविधिवैयर्थ्यमिति—वाच्यम् ; 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि' इति केकयेनोक्ते तदनभ्युपगमेन वैश्वानरविद्याया एव प्रार्थितत्वात्; प्रतिग्रहापेक्षया व्यस्तोपासनं प्रशस्तं, तदपेक्षया समस्तोपासनं प्रशस्तमिति बोधनाय प्रथमं व्यस्तोपासनोपदेशात्। निषेधार्थमनुवादस्थलेऽपि तात्पर्याङ्गीकारे उक्तस्थलद्वयेऽपि विकल्पापत्तिरिति नोक्तरीत्या विकल्पापादनं युक्तं, किन्तु पूर्वोक्तरीत्या विकल्पापादनं तन्निराकरणाय भिन्नशाखागतवाक्ययोरप्येकग्रन्थत्वं चेति युक्तं, ततश्च सदेवेत्यादिवाक्यनिर्दिष्टस्य यतोवेतिवाक्यगतयच्छब्देन परामर्शस्य विशिष्टवाचकानामिति न्यायप्रवृत्तेश्चोपपत्तिः। तथा च ब्रह्म वेति वाक्ये ब्रह्मशब्दस्य केवलबृह-

स्वाश्रयपरत्वाद्यतोवेत्यादिवाक्येन निरतिशयबृहत्त्वस्य विधानोपपत्तिः, तस्य पूर्वमज्ञातत्वात् ॥

न चैवमपि–तस्य विधेयत्वं न सम्भवति, सामान्यतो निरतिशयबृहत्त्वाश्रयः किञ्चिदस्तीति भृगुणाऽपि ज्ञातत्वात्, अन्यथा अधीहि भगवो ब्रह्मेतीति प्रश्नानुपपत्तेः; 'नकिरिन्द्र त्वदुत्तरः' 'न वा ओजीयो रुद्र त्वदस्ति' 'अग्निस्सर्वा देवता ब्राह्मणो वै सर्वा देवता' 'आपो वा इदं सर्वम्' इत्यादिश्रुतिषु निरतिशयबृहत्त्वस्य रुद्रेन्द्रादिषु प्रतिपन्नतया सर्वेषां च निस्समाभ्यधिकत्वघटितनिरातिशयबृहत्त्वानुपपत्त्या तदाश्रयवस्तुविशेषजिज्ञासया तादृशप्रश्नकरणादिति—वाच्यम्; उक्तरीत्या निरतिशयबृहत्त्वस्य विधेयत्वासम्भवमभिप्रेत्यैव टीकायां यतोवेत्यादिवाक्येन प्रापकवाक्यप्रतिपन्नं कारणत्वमनूद्य तस्य ब्रह्मलक्षणत्वं विधीयत इति कल्पान्तरावलम्बनात् ॥

उक्तं च **जन्माद्यधिकरणटीकायां**—

> "निरतिशयबृहत्त्वं बहुष्वर्थेष्वापाततःप्रतीतं, कारणत्वं च प्रापकवाक्यावगतं तस्य निरतिशयबृहद्वस्तुलक्षणत्वमनवगतमिति तदत्र विधेयम् ॥" —इति ॥

**अयमर्थः**—तद्विजिज्ञासस्व तद्ब्रह्मेति श्रुत्या कारणत्वविशिष्टं ब्रह्मेति बोधे विशेष्यतावच्छेदकीभूतकारणत्वस्य ब्रह्मत्वे समनैयत्यसम्बन्धेन भानात्तादृशसमनैयत्यस्यैव कारणत्वगतब्रह्मत्वसमनैयत्यरूपत्वात् संसर्गतया भासमाने तादृशसमनैयत्यरूपब्रह्मलक्षणत्वे विधेयताख्यविषयता स्वीक्रियते; पृथिव्यां गन्ध इत्यादौ गन्धरूपविशेष्यस्यैव 'या गन्धवती तां पृथिवीं विद्धि' इत्यत्र संसर्गतया भासमाने पृथिवीत्वसमनैयत्यरूपपृथिवीलक्षणत्वेऽपि विधेयत्वस्यावश्यकत्वात् ॥

उक्तं च तत्रैव **टीकायां**—

'या गन्धवती तां पृथिवीं विद्धीतिवत् कारणत्वस्य ब्रह्मलक्षण-
त्वमेवास्य वाक्यस्य विधेयम्' —इति ॥

अत एव तिलकी कर्मकुर्वीतेत्यादौ तिलकस्य कर्मकरणस्य च शास्त्रा-
न्तरप्राप्तत्वेन विधेयत्वासम्भवात्संसर्गतया भासमानं कर्मकरणनिष्ठं
तिलकसमानकालीनत्वमेव विधेयमित्युक्तं नैयायिकैः ॥

**यदि च**—समानकालीनत्वसम्बन्धेन तत्र तिलकस्यैव विधेयत्वं
न संसर्गस्येति–**उच्यते**; **तदा**–प्रकृतेऽपि समनैयत्यसम्बन्धेन ब्रह्मत्वे
कारणत्वमेव विधेयमस्त्विति न कश्चिद्विशेषः॥ न च–विशेष्यतावच्छे-
दकस्य प्रकारे व्यापकतासम्बन्धेन भानस्याङ्गीकारेऽपि समनैयत्य-
सम्बन्धेन भानं क्वापि न दृष्टमिति–वाच्यम्; सति तात्पर्ये व्यापक-
तासम्बन्धेनेव समनैयत्यसम्बन्धेनापि भानस्य सम्भवात्; यत्र व्याप्य-
धर्मप्रकारकजिज्ञासया प्रश्नः तदुत्तरवाक्यजन्यबोधे विशेष्यतावच्छेद-
कस्य प्रकारे व्यापकतासम्बन्धेन भानं, यथा कः पचतीति प्रश्नोत्तरभूते
देवदत्तः पचतीति वाक्ये; तत्र प्रश्नघटककिंपदस्य समभिव्याहृत-
पदार्थतावच्छेदकव्याप्यधर्मप्रकारकजिज्ञासाविषयार्थकतया पाककर्तृत्व-
व्याप्यधर्मप्रकारकजिज्ञासाविषयः पाककर्तेति प्रश्नवाक्याद्बोधेन उत्तर-
वाक्येऽपि देवदत्तत्वे पाककर्तृत्वव्याप्यत्वभानावश्यकतया विशेष्य-
तावच्छेदकस्य व्यापकतासम्बन्धेन पाककर्तृत्वे बोधसिद्धेः। अत एव
कः पचतीति प्रश्नस्य प्रमेयः पचति मनुष्यः पचतीत्यादि नोत्तरं; यत्र
समभिव्याहृतपदार्थतावच्छेदकसमनियतधर्मप्रकारकजिज्ञासया प्रश्न-
स्तत्रोत्तरजन्यबोधे समनैयत्यस्यैव संसर्गता; यथा का पृथिवीति प्रश्न-
स्योत्तरे गन्धवती पृथिवीत्यादौ, तत्र किंपदस्य समनियतधर्मप्रकारक-
जिज्ञासाविषयार्थकत्वात्। अत एव का पृथिवीति प्रश्नस्य घटः
पृथिवीति नोत्तरम् ॥

एवं च—नन्वनुमितिहेतुभूतव्याप्तिज्ञाने का व्याप्तिः, न तावदव्यभिचरितत्वं, तद्धि न साध्याभाववदवृत्तित्वं—केवलान्वयिन्यभावादित्यादि-चिन्तामणिग्रन्थस्सङ्गच्छते; तत्र किंपदस्य व्याप्यधर्मप्रकारकजिज्ञासा-विषयार्थकत्वे साध्याभाववदवृत्तित्वत्वस्यानुमितिजनकज्ञानविषयत्व-व्याप्यत्वानपायेन केवलान्वयिन्यभावादित्यस्यासङ्गतेस्समनियतधर्म-प्रकारकजिज्ञासाविषयपरत्वावश्यकत्वात्; 'प्रकृते अधीहि भगवो ब्रह्मेति' इत्यत्रापि धातोर्ब्रह्मत्वसमनियतधर्मप्रकारकज्ञानजनकशब्द-परत्वात्तदुत्तरभूते तद्ब्रह्मेत्यत्र समनैयत्यस्य संसर्गत्वं, तस्य विधेयत्वं चावश्यमिति—बोध्यम् ॥

न च—अग्नीन्द्रादिषु बहुषु निरतिशयबृहत्त्वं सन्दिहानस्य कथं कारणत्वसमनैयत्योक्त्या तदाश्रयवस्तुविशेषनिश्चयः, कारणत्वस्यापि बहुषु सन्देहसम्भवादिति—वाच्यम्; कारणत्वस्य 'एको ह वै नारायण आसीत्' इत्यनेन नारायणत्वव्याप्यत्वेन निश्चितत्वात्, तत्र विधेयीभूतनारायणत्वे कारणत्वस्योद्देश्यतावच्छेदकस्य व्यापकतासम्बन्धेन भानात्, तथा निश्चितकारणत्वेन निरतिशयबृहत्त्वाश्रयवस्तुविशेष-निश्चयसम्भव इत्यभिप्रायेणैव जन्माद्यस्य यत इतिसूत्रप्रणयनात् । तथा च **पाशुपताधिकरणे श्रीभाष्यम्**—

> " 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्यारभ्य 'स एकाकी न रमेत' इति सृष्टिवाक्योदितं स्रष्टारं नारायणमेव समानप्रकरणस्थास्सदेव सोम्येदमग्र आसीदित्यादिषु साधारणास्सद्ब्रह्मादिशब्दाः प्रतिपादयन्तीति जन्माद्यस्य यत इत्यत्र प्रतिपादितम् ॥" —इति ॥

सूत्रकृता कारणत्वेन निरतिशयबृहत्त्वाश्रयवस्तुविशेषनिश्चय-करणात् कारणत्वस्य वस्तुविशेषनिष्ठत्वनिश्चयावश्यकतया सद्ब्रह्मादि-सामान्यशब्दानां विशेषपर्यवसानमपि जन्मादिसूत्राभिप्रेतमित्यर्थः ।

जन्माद्यस्य यत इत्यत्र प्रतिपादितमिति भाष्यं तु न यथाश्रुतार्थपरं, तत्सूत्रभाष्ये तादृशार्थस्याप्रतिपादितत्वात् । तथा च प्रतिपादितमिति प्रतीकमुपादाय टीका—

"यतो वा इमानीत्यादिवाक्येऽस्यार्थस्याभिप्रेतत्वात्सूत्रकारेणापि तथाऽभिप्रेतमित्यर्थः । जन्मादिसूत्रभाष्येण परस्मात् पुंस इत्यन्तेनायमर्थस्सूचितः ॥" —इति ॥

**अथ**—कारणत्वस्य नारायणत्वव्याप्यतायाः जन्मादिसूत्राभिप्रेतत्वे लिङ्गभूयस्त्वाधिकरणस्योपास्यत्वे नारायणत्वव्याप्यतासाधकस्य वैफल्यं, उपास्यत्वे कारणत्वव्याप्यत्वस्य कारणं तु ध्येय इति श्रुतिसिद्धतया नारायणत्वव्याप्यताया अप्यावश्यकत्वात्, तद्व्याप्यव्याप्यस्य तद्व्याप्यत्वनियमात् । उपास्यत्वस्य कारणत्वव्याप्यत्वमुक्तश्रुतिसिद्धमिति च सूत्रकारानुमतं, कारणवाक्यविचारपरे प्रथमपादे उपास्यत्वप्रतिपादनपरप्रतर्दनविद्याविचाररूपस्येन्द्रप्राणाधिकरणस्य निवेशात्—इति चेन्न ॥ कारणत्वस्य नारायणत्वव्याप्यत्वमनुपपन्नं, कारणत्वव्याप्यस्योपास्यत्वस्य नारायणभिन्ने शिवादौ श्रवणादित्याक्षेपपरिहारार्थतया तदधिकरणसार्थक्यात् ; तदधिकरणे शिवशम्भ्वादिपदचिह्नितेष्वपि वाक्येषु नारायणस्यैवोपास्यत्वसमर्थनद्वारा उपास्यत्वे नारायणत्वव्याप्यत्वसमर्थनात्—इत्यलं प्रसक्तानुप्रसक्त्या ॥

अयं च विधिश्चतुर्विधः—उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति । तत्रोपासनादेः प्राथमिकप्राप्तिर्यतस्स उत्पत्तिविधिः, प्रथमप्राप्तेरुत्पत्तिरूपत्वात् ; प्राप्तिः प्रवृत्तिविषयताप्रयोजकाज्ञादिविषयत्वप्रतीतिः ; अत्रोपकोसलविद्यायां कं ब्रह्म खं ब्रह्म अस्मद्विद्या चात्मविद्या चेति प्राप्तसुखविशिष्टब्रह्मोपासनानुवादेन अक्षिरूपस्थानसंयद्वामत्वादिगुणविधायकस्य 'य एषोऽक्षिणि पुरुषो दृश्यत एतं संयद्वाम इत्याचक्षते' इत्यादेरुपासनोत्पत्तिविधित्वाभावात्प्राप्तौ प्राथम्यं

विशेषणम् । उत्पत्तिविधेश्च क्वचिद्ब्रह्मोपासनमात्रोत्पादकः, यथा स खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्यादौ ; क्वचिच्च गुणविशिष्ट ब्रह्मोपासनोत्पादकः, यथा कहोलप्रश्ने 'एष त आत्मा सर्वान्तरः इत्युक्तसर्वान्तरत्वविशिष्टब्रह्मणो बाल्येन तिष्ठासेदित्युपासनविधिः तथा च व्यतिहारसूत्रे **श्रीभाष्यम्**–'सर्वान्तरात्मत्वविशिष्टे ब्रह्मण्युपास्ये' इति ; 'विधिप्रत्ययश्चोत्तरत्र दृश्यते, तस्माद्ब्रह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्'—इति च । अत्र **टीका**–'तिष्ठासेत्–ब्रह्मणि तिष्ठासेत्, निष्ठां लभेत, उपासीतेत्यर्थः'—इति ॥

[२]क्वचिद्ब्रह्मोपासनगुणोपासनोभयविधिः ; यथा–'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्'–इति ; अत्र यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्यनूद्य तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशो यच्च तदन्तर्वर्तिगुणजातं तदुभयमुपासितव्यमित्यर्थः ॥ अत्र—यद्यपि दहराकाशान्तर्वर्तिगुणजातस्यैवोपास्यत्वं वाक्यस्वरससिद्धं ; तथाऽपि 'यस्तमात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' इति फलश्रुतावुभयोरपि फलकीर्तनादुपासनद्वयमपि विधेयमेव ; तदुपासितव्यमिति तच्छब्दस्य यो दहराकाशः यच्च तदन्तर्वर्तिगुणजातमित्यर्थकत्वात् ॥

[४]क्वचिच्च प्राप्तब्रह्मोपासनानुवादेन गुणविधिः ; यथा 'स क्रतुं कुर्वीत मनोमयः प्राणशरीरः' इत्यादौ, 'एतं संयद्वाम इत्याचक्षते' इत्यादौ च ॥ [५]क्वचिच्च तादृशोपासनानुवादेन स्थानविधिः, यथा 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यादौ ; तत्र दृश्यत इत्यनेन दर्शनसमानाकारतापन्नध्यानानुवादात्, 'दृश्यत इत्युपासकदर्शनानुवादः' इति **ब्रह्मविद्याविजये महाचार्यै**रुक्तत्वात् ॥ [६]क्वचिच्च दिव्यमङ्गलविग्रह-

विधिः, यथा 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादौ। उक्तं च तत्रैव **महाचार्यैः**—

"य एषोऽन्तरादित्य इत्यादित्यमण्डलान्तर्वर्तिपुरुषस्याप्राप्तत्वात् वचनानि त्वपूर्वत्वादिति न्यायेन यदाग्नेयादिवद्विधिपरम्"— इति ॥

केचिच्च फलविधिः, यथा 'यस्तमात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यादौ। न च—गुणादि-विधीनां प्राथमिकप्रवृत्तिविषयताप्रयोजकत्वाभावादुत्पत्तिविधित्वं न सम्भवतीति—वाच्यम्; प्रवृत्तिविषयता हि क्वचित्साध्यतारूपा, क्वचित्साध्यतावच्छेदकतारूपा, क्वचिदुद्देश्यतारूपा च। तत्रोपासने साध्यतारूपा; गुणविग्रहस्थानेषु साध्यतावच्छेदकतारूपा। तत्र गुणविग्रहयोरपृथक्सिद्धिसम्बन्धावच्छिन्नप्रकारतासम्बन्धावच्छिन्ना साध्यतावच्छेदकता, स्थाने चाधेयतासम्बन्धावच्छिन्नप्रकारतासम्बन्धावच्छिन्ना साध्यतावच्छेदकता; गुणविग्रहयोर्ब्रह्मण्यपृथक्सिद्धिसम्बन्धेन स्थानस्य चाधेयतासम्बन्धेन प्रकारत्वात्। फले चोद्देश्यतारूपेति ॥

तत्रोत्पत्तिशिष्टगुणावरुद्धे न गुणान्तरस्य तादृशविग्रहावरुद्धे न विग्रहान्तरस्य तादृशस्थानावरुद्धे च न स्थानान्तरस्य तादृशफलावरुद्धे च न फलान्तरस्य विधानं सम्भवति; 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्रामिक्षारूपोत्पत्तिशिष्टगुणावरुद्धे यागे वाजिनरूपगुणान्तरस्य विधानं न सम्भवतीति वाजिभ्यो वाजिनमिति वाक्यं तद्विशिष्टयागान्तरविधायकमिति गुणाधिकरणे सिद्धान्तितत्वात्, उपासनविधिस्थलेऽपि तन्न्यायानुरोधस्यावश्यकत्वात् ॥

अत एव **सर्वत्रप्रसिद्ध्यधिकरणटीकायां**—शाण्डिल्यविद्यागतोपासनविधेरुत्पत्तिशिष्टसर्वात्मकत्वावरोधान्मनोमयत्वादीनां नोपास्या-

कारसमर्पकत्वम्—**इत्याशङ्क्य**; सर्वात्मकत्वं नोपास्यगुणः—**इति समाहितम्** ॥

१ **एवमन्तरधिकरणटीकायां**—'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति वाक्यस्य, कप्यासं सूर्यमण्डलं पुण्डरीकं हृदयपुण्डरीकं च यथोपासनस्थानमेवमक्षिणी अप्युपासनस्थाने इत्यर्थः—**इति वाक्यकारोक्तपूर्वपक्षार्थनिराकरणावसरे,** अन्तरादित्यविद्यायां 'य एषोऽन्तरादित्ये' इति स्थानस्योक्तत्वादक्षिविद्यायां च 'य एषोन्तरक्षिणि' इति स्थानस्योक्तत्वात् उभयत्र स्थानविध्यपेक्षा नास्तीत्यनाकाङ्क्षितत्वादिदं वाक्यमनन्वितं स्यात्—**इति दूषणमुक्तम्** ॥

२ एवं 'जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यात्' इति **सूत्रटीकायां**—'स यश्चायं पुरुषे यश्चासावादित्ये' इति वाक्ये जीवान्तर्यामिण आदित्यान्तर्यामिणश्चोपासनमुच्यते—**इत्याशङ्क्य**; तथा सति स्थानभेदाद्विद्याभेदापत्तिः—**इति दूषयित्वा**; स यश्चायं पुरुष इति विज्ञानमयादन्तरस्यानन्दमयस्यानुवादः, यश्चासावादित्य इति दिव्यमङ्गलविग्रहस्यातिदेशः—**इत्युक्तम्** ॥

४ एवं **श्रीभाष्ये** सम्बन्धादेवमन्यत्रापीत्यधिकरणे—सत्यं ब्रह्मेत्युपक्रम्य 'तद्यत्सत्यं असौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ' इति पुरुषद्वयमभिधाय प्रवृत्तायां व्याहृतिविद्यायां 'य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिर एकं भुव इति बाहू स्वरिति प्रतिष्ठा तस्योपनिषदः ह' इति नामधेयं चाभिधाय; 'हन्ति पाप्मानं जहाति च य एवं वेद' इति आदित्यमण्डलस्थव्याहृतिशरीरकोपासनस्य फलमुक्त्वा; 'योऽयं दक्षिणेऽक्षिन् पुरुषस्तस्य भूरिति शिर एकं' इत्यादिनाऽक्ष्यधिकरणकपुरुषस्यापि व्याहृतिशरीरकत्वं तस्याहमिति नामधेयं, 'हन्ति

पाप्मानं जहाति च य एवं वेद' इति तदुपासनफलं चाभिहितम् । तत्रादित्यपुरुषाक्षिपुरुषोपासनयोरैक्यं पूर्वपक्षीकृत्यादित्यरूपस्थानविशिष्टोपासने स्थानान्तरान्वयासम्भवाद्भेदस्समर्थितः । तथा सैव हि सत्यादय इति सूत्रभाष्ये—उक्तादित्यपुरुषाक्षिपुरुषोपासनयोरैक्यस्थापनपरतया **शङ्करभाष्यकृतायास्तत्सूत्रयोजनाया दूषणावसरे**— स्थानविशिष्टे स्थानान्तरान्वयासम्भवात्फलविशिष्टे फलान्तरान्वयासम्भवाच्च विद्ययोर्भेदः । न च—उपकोसलविद्यायां 'एतं संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामान्यभिसंयन्ति, सर्वाण्येनं वामान्यभिसंयन्ति, य एवं वेद' इत्यादौ यथा संयद्वामत्वादिगुणोपासनेषु फलकथनं फलरूपतात्पर्यलिङ्गोपन्यासेन तेषु गुणेषु तात्पर्यप्रदर्शनार्थं, तथा 'तस्योपनिषदहम्' इति 'हन्ति पाप्मानं जहाति च य एवं वेद' इति फलकथनमपि नामधेयवैशिष्ट्ये तात्पर्यग्राहकमेव; न तु व्याहृतिशरीरकाक्षिपुरुषविद्योपासनमलमिति—वाच्यम्; विशिष्टोपासनस्य फलाकाङ्क्षासत्त्वेन तादृशफलसमर्पकतया सार्थकत्वसम्भवे निरर्थकत्वापरपर्यायतात्पर्यग्राहकत्वकल्पनस्यानुचितत्वात् । न च—तादृशोपासनयोरेकविद्यात्वात् फलश्रुतेस्तात्पर्यग्राहकत्वमिति—वाच्यम्; तथा सत्यन्योन्याश्रयापत्तेः । एकविद्यात्वसिद्धौ फलश्रुतेस्तात्पर्यग्राहकत्वसिद्धिः, तात्पर्यग्राहकत्वसिद्धौ चैकविद्यात्वसिद्धिरिति—**प्रतिपादितम्** ॥ फलविशिष्टे फलान्तरान्वयासम्भवश्च सूत्रकारसम्मतः, प्राणविदस्सर्वान्नीनत्वस्यापद्विषयत्वाभिधानात् । अन्यथा ज्यैष्ठ्यश्रैष्ठ्यादिफलकोपासनेऽपि फलान्तरान्वयसम्भवे 'एवंविदि पापं कर्म न श्लिष्यते' इत्यादेरिव 'न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यादेरपि फलविधित्वापत्तौ आपद्विषयत्वकल्पनानुपपत्तेः । एवं च—सूत्रभाष्यटीकादिषु बहुषु स्थलेषु तादृशन्यायस्य सञ्चारितत्वात्तादृशन्यायानुरोध आवश्यक इत्यवसीयते ॥

**ननु**—तादृशन्यायानुरोधो न युक्तः, तथा सति **आनन्दादयः प्रधानस्येत्यधिकरणे** उत्पत्तिशिष्टानेकभावरूपगुणविशिष्टेष्वानन्दादिभावरूपगुणानामन्वयस्य अक्षरधियामित्यधिकरणे तादृशाभावरूपगुणविशिष्टेषूपासनेष्वभावरूपगुणानामन्वयस्य च प्रतिपादनात्तद्विरोधः—**इति चेत्** ॥ **उच्यते**। यथा—आर्षेयं वृणीते, त्रीन् वृणीते, पुरोडाशं चतुर्धा करोति, आग्नेयं चतुर्धा करोति—इत्यादिभिन्नवाक्यानामप्येकवाक्यतापन्नानां त्रित्वविशिष्टार्षेयवरणादिविधिपरत्वं पूर्वतन्त्रसिद्धम्; यथा वा द्रष्टव्यो निदिध्यासितव्य इति मैत्रेयीब्राह्मणगतवाक्यस्य 'तस्मिन् यदन्तस्तदुपासितव्यं' इति दहरादिविद्यावाक्येनैकवाक्यत्वमङ्गीकृत्य विद्यासामान्यस्य दर्शनसमानाकारध्यानविधिपरत्वमुत्तरतन्त्रसिद्धम् ; तथा—सत्यंज्ञानमित्यादेस्सर्वविद्याभिस्सहैकवाक्यतामङ्गीकृत्य तत्तद्विद्योदितगुणानन्दादिगुणोभयविशिष्टब्रह्मध्यानविधिपरत्वं स्वीक्रियते। तथा च—तत्तद्विद्योदितगुणानामिवानन्दादिगुणानामप्युत्पत्तिशिष्टत्वान्न तादृशन्यायविरोधः। एवमेव हि कौषीतकिनां प्राणविद्यायां दशमाध्यायगतायां ज्यैष्ठ्यश्रैष्ठ्यरूपगुणद्वयावरुद्धायां छन्दोगवाजसनेयिनां प्राणविद्यायां प्रतिपाद्यमानानां वसिष्ठत्वप्रतिष्ठात्वादिगुणानामुपसंहारः सर्वाभेदादन्यत्रेम इत्यधिकरणसिद्धस्सङ्गच्छते । छन्दोगवाजसनेयिनां प्राणविद्यया सह कौषीतकिनां प्राणविद्याया एकवाक्यत्वमङ्गीकृत्य छन्दोगादिप्राणविद्याप्रतिपन्नवसिष्ठत्वप्रतिष्ठात्वसम्पत्त्यायतनत्वरूपगुणानामप्युत्पत्तिशिष्टत्वस्यैवाङ्गीकर्तव्यत्वात् ॥

**अथ**—अत्रोत्पत्तिशिष्टगुणावरुद्धे गुणान्तरविधानं नास्तीत्यस्य स्वानिष्पाद्यगुणावरुद्धे गुणान्तरस्य न विधानमित्येवार्थः; अन्यथा उत्पत्तिशिष्टपुरोडाशाद्यवरुद्धेष्वाग्नेयादिषु 'व्रीहिभिर्यजेत' 'यवैर्यजेत'

इत्यादिविकल्पविधिना व्रीह्यादीनां विधानानुपपत्तेः। तथा च व्रीहि-निष्पाद्यपुरोडाशावरुद्धेषु व्रीह्यादीनां विधानवत् वसिष्ठत्वाद्युपपाद्य-ज्यैष्ठ्यश्रैष्ठ्यावरुद्धे प्राणोपासने वसिष्ठत्वादीनामुत्पत्तिशिष्टत्वाभा-वेऽपि विधानमुपपद्यते। तत्र वागाद्यपेक्षया प्राणस्य ज्यैष्ठ्यं तदधि-करणयावत्कालवृत्तित्वे सति तदनधिकरणकालवृत्तित्वरूपं कालत आधिक्यम्। तच्च गोलकादिनिष्पत्त्यनन्तरभाविन्याः चक्षुरादिवृद्धेः प्रागेव गर्भस्थपुरुषे प्राणस्य वृद्धिलाभादुपपद्यते। प्राणस्य वृद्ध्या हि गर्भस्य वृद्धिः, प्राणस्य वागाद्यपेक्षया श्रैष्ठ्यं च तद्गतवसिष्ठत्वा-दिगुणवत्त्वे सत्यधिकगुणवत्त्वं; तच्च वागादिगतवसिष्ठत्वादिगुणवत्त्वं विनाऽनुपपन्नमिति तदुपपाद्यमेव॥ न च—वाचो वसिष्ठत्वं वाग्मिन-स्सद्व्यवहारजननेन वस्तुतासम्पादकत्वं सद्व्यवहारजनकत्वपर्यवसितं, चक्षुषः प्रतिष्ठात्वं चक्षुष्मतस्समविषमभूतलादिप्रदर्शनेन प्रतिष्ठा-सम्पादकत्वं, पतनाभावहेतुभूतसमविषमभूतलादिविषयकचाक्षुषज्ञान-जनकत्वपर्यवसितं, श्रोत्रस्य सम्पत्त्वं वेदतदर्थश्रवणेन सम्पत्करत्वं सम्पद्धेतुभूततादृशश्रावणजनकत्वरूपं, मनस आयतनत्वं सुखादि-साक्षात्कारजनकत्वरूपभोगायतनत्वं, चक्षुषा हि 'समे दुर्गे च प्रति-तिष्ठति श्रोत्रेण हीमे सर्वे वेदा अभिसम्पन्नाः' इति वाजसनेयकगत-वाक्यशेषानुसारात् तादृशं च वसिष्ठत्वादिकं प्राणस्य न सम्भवति, वाक्चक्षुरादिवत्तस्य व्यवहारचाक्षुषादौ हेतुत्वाभावादिति—वाच्यम्; स्वाश्रयत्वस्वप्रयोजकत्वान्यतरसम्बन्धेन व्यवहारचाक्षुषादिजनकता-वत्त्वस्य वसिष्ठत्वप्रतिष्ठात्वादिरूपतया तेषां वागादीन्द्रियप्राणोभय-साधारणत्वात्, 'वाग्वा व वसिष्ठा चक्षुर्वा व प्रतिष्ठा' इत्यादिना इन्द्रियेषु स्वाश्रयत्वसम्बन्धेन व्यवहारादिहेतुत्वस्य 'अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि' 'अथ हैनं चक्षुरुवाच यदहं प्रति-

ष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसि' इत्यादिना छान्दोग्ये स्वप्रयोजकत्व-सम्बन्धेन तादृशहेतुतावत्त्वस्य प्राणे प्रतिपादनात्, वसिष्ठत्वादि-विशिष्टस्य वागादेः प्राणाधीनत्वात्प्राणस्यापि वसिष्ठत्वमिति यदहं वसिष्ठोऽस्मीत्यादिवाक्यार्थात्। उक्तं च **श्रीभाष्ये**—

"वागादीनां वसिष्ठत्वादिगुणान्वितानां प्राणाधीनकार्यत्वोपपाद-नेनैव प्राणस्य वागादिवसिष्ठत्वादिगुणहेतुत्वस्य सिद्धत्वात् तदेव हि प्राणस्य वसिष्ठत्वादिगुणयोगित्वं यद्वागादिगतवसि-ष्ठत्वादिहेतुत्वम् ॥" —इति ॥

तथा च वसिष्ठत्वादीनामुत्पत्तिशिष्टत्वाभावेऽपि न दोषः —इति ॥

**मैवम्** ॥ प्राणस्य श्रैष्ठ्यं हि नोक्तरूपं गुणाधिक्यं, किं तु शरीर-गतजीवोपकरणसामान्याभावप्रयोजकाभावप्रतियोगित्वपर्यवसितं शरी-रस्य कार्यविधुरतारूपपापिष्ठत्वप्रयोजकोत्क्रमणकर्तृत्वमेव श्रेष्ठत्वं, छन्दोगादीनां प्राणविद्यायां 'अहं श्रेयानस्म्यहं श्रेयानस्मि' इति श्रेष्ठत्वे विवादपूर्वकं प्रजापतिसमीपं गतैस्सप्राणैरिन्द्रियैः 'भगवन् को नश्श्रेष्ठः' इति पृष्टे 'यस्मिन् उत्क्रान्ते इदं शरीरं पापिष्ठमिव दृश्यते स वः श्रेष्ठः' इति प्रजापतिना उत्तरदानात्तदनन्तरं वागाद्येकैकेन्द्रि-याणां निर्गमनेऽपीतरेषां सुखेन स्वस्वकार्यसमर्थतयाऽवस्थानं प्रतिपाद्य "अथ ह प्राण उच्चक्रमिष्यन् स यथा सुहयःपड्वीशशङ्कून् सङ्खि-देदेवमितरान् प्राणान् समखिदत्तं हाभिसमेत्योचुर्भगवन्नेधि त्वं नश्श्रे-ष्ठोऽसि मोत्क्रमीः" इति प्रजापतिनिरुक्तं श्रेष्ठत्वं प्राणे दृष्टवता-मिन्द्रियाणां प्राणश्रैष्ठ्यांशे विवादाभावप्रतिपादनादेतावतैव श्रैष्ठ्य-स्योपपादितत्वादनन्तरसन्दर्भगतस्य 'यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठो-ऽसि' इत्यादेः श्रैष्ठ्योपपादकत्वाप्रतीतेः; प्रत्युत श्रैष्ठ्याभ्युपगमपूर्वक-परितोषकदानपरताप्रतीतेश्च। तस्मात्तत्रैकवाक्यत्वाभ्युपगमेन वसिष्ठ-त्वादीनामप्युत्पत्तिशिष्टत्वमङ्गीकार्यमेव ॥

**ननु**–यस्मिन्नुत्क्रान्त इत्यादेस्स्वस्वकार्यविशिष्टजीवोपकरणसामान्यस्थितिप्रयोजकत्वमेव श्रेष्ठत्वमित्यर्थः । तत्र 'स यथा सुहयः' इत्यादेर्विशेष्यांशस्थितिप्रयोजकत्वोपपादनपरत्वात् यदहं वसिष्ठोऽस्मीत्यादेश्च विशेषणांशस्थितिप्रयोजकत्वोपपादनपरत्वाद्वागादिगतव्यवहारादिजनकत्वप्रयोजकत्वरूपाणां प्राणगतवसिष्ठत्वादीनामपि निरुक्तश्रैष्ठ्योपपादकत्वमस्त्येव । उक्तं च सर्वाभेदादित्यधिकरण**श्रीभाष्ये**—

"सर्वेषां प्राणाधीनस्थितित्वतदधीनकार्यत्वाभ्यां प्राणस्य ज्यैष्ठ्य, मुपपादितम्" —इति ॥

अत्र तदधीनकार्यत्वं प्राणाधीनव्यवहारादिजनकतावत्त्वं, ज्यैष्ठ्यं, निरुक्तविशिष्टसत्ताप्रयोजकत्वरूपश्रैष्ठ्यम् । आनन्दादयः प्रधानस्येति सूत्रावतरण**श्रीभाष्ये**ऽप्युक्तम्—

"यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकीप्राणविद्यायां प्राप्तिः; तथा ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते ते सर्वासु ब्रह्मविद्यास्वनुसन्धेया इत्ययमर्थः प्रतिपाद्यते ॥" —इति ॥

तथा च–वसिष्ठत्वादीनां श्रैष्ठ्योपपादकत्वान्नोत्पत्तिशिष्टत्वापेक्षा-वस्तुतो वसिष्ठत्वादीनां उत्पत्तिशिष्टत्वाभावेऽपि न क्षतिः; तेषां कौषीतकीप्राणविद्यायामन्यथाऽनुपपत्तिबलेनैव प्राप्ततया विधानासम्भवात् सर्वप्रकारेण अप्राप्तस्यैव विधेयत्वात्, अन्यथा निदिध्यासनान्यथानुपपत्तिप्राप्तस्य श्रवणस्यापि विधेयत्वापत्तिः—**इति चेत्** ॥ एवं तर्हि आनन्दादीनामपि न ब्रह्मविद्यासामान्ये विधानं; तेषामपि ब्रह्मानुसन्धानान्यथाऽनुपपत्तिबलेनैव प्राप्तत्वात् ॥

**एतेन**—सर्वं खल्विदं ब्रह्मेत्यादौ ब्रह्मोपासने सार्वात्म्यस्य उत्पत्तिशिष्टत्वाभावेऽप्यानन्दादीनां तथात्वावश्यकतया मनोमयत्वादीनां विधानानुपपत्तिस्तदवस्थैव, तादृशन्यायस्य उत्पत्तिशिष्टगुणावरुद्धे तद्विरोधिगुणानां न विधानमित्यर्थकत्वे च सार्वात्म्यस्योपास्यत्वनिराकरणमयुक्तमिति—**शङ्का निरस्ता**; तत्र अन्यथानुपपत्त्या आनन्दादीनां प्राप्तावप्युत्पत्तिशिष्टत्वाभावेन मनोमयत्वादीनां विधानोपपत्तेः ॥

**ननु**—उपपादकगुणानामप्युपास्यत्वाङ्गीकारे व्यतिहारसूत्रश्रीभाष्यविरोधः; तत्र सर्वान्तरत्वोपपादकानां प्राणहेतुत्वादीनामुपास्यत्वनिराकरणात्। तथा च **श्रीभाष्यम्**—

"ब्रह्मणस्सर्वान्तरात्मत्वमेवोपास्यगुणः, प्राणनहेतुत्वादयस्तु तस्योपपादका नोपास्याः ॥" —इति ॥

—**इति चेत्** ॥ **अत्रोच्यते**—सर्वान्तरत्वं हि सर्वान्तर्यामित्वं, सर्वान्तर्वृत्तित्वे सति सर्वनिष्ठचेष्टाप्रयोजकत्वे सति दुःखाभाववत्त्वरूपं; अन्तर्यामिब्राह्मणे 'यश्चक्षुषि तिष्ठन्' इयादिना चक्षुरादिवृत्तित्वस्य 'यश्चक्षुरन्तरो यमयति' इत्यादिना तन्निष्ठचेष्टाप्रयोजकत्वस्य 'स त आत्माऽन्तर्याम्यमृतः' इत्यमृतपदेन दुःखसामान्याभावस्य च चक्षुराद्यन्तर्यामित्वशरीरप्रविष्टत्वबोधनात्, चक्षुरादिचेष्टाप्रयोजकस्य प्राणस्य तदन्तर्यामित्ववारणाय प्रथमसत्यन्तस्य चक्षुराद्यन्तर्वृत्त्याकाशादिवारणाय द्वितीयसत्यन्तस्य तदभिमानिदेवताभूतादित्यवारणाय विशेष्यदलस्य च सार्थकत्वात्। 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व' इति याज्ञवल्क्यं प्रत्युषस्तेनान्तर्यामिप्रश्ने कृते 'यःप्राणेन प्राणिति स त आत्मा सर्वान्तरो, योऽपानेनापानति स त आत्मा सर्वान्तरः' इत्यादिनाऽन्तर्यामित्वघटकचेष्टासामान्यप्रयोजकत्वो-

पपादकतया प्राणनादिरूपक्रियाविशेषप्रयोजकत्वमुक्त्वा 'एष त आत्मा सर्वान्तरः' इत्युत्तरितम्। अनेकदेहपरिग्रहवतां योगिनां देवानां च तावद्देहगतक्रियाप्रयोजकत्वस्य प्रदीपवदावेश इति न्यायेन ज्ञानद्वारकव्याप्तिकृतस्य सत्त्वात्तन्न्यायेन कस्य चिज्जीवस्य धर्मभूतज्ञानाद्वारकव्याप्त्या सर्वक्रियाप्रयोजकत्वसम्भावनया जीवव्यावृत्त्यसम्भवं मन्वानेनोषस्तेन 'यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्व' इति पुनः पृष्टे 'न दृष्टेर्द्रष्टारं पश्येः' इत्यादिना अन्तर्यामित्वमपृथक्सिद्धिसम्बन्धावच्छिन्नवृत्तित्वघटितं; न तु स्वीयधर्मभूतज्ञानवत्त्वसम्बन्धावाच्छिन्नवृत्तित्वघटितामित्यभिप्रायेण याज्ञवल्क्येनोत्तरिते अपृथक्सिद्धिसम्बन्धावच्छिन्नसर्ववृत्तित्वघटितान्तर्यामित्वस्य जीवेऽसम्भवादुपरते उषस्ते जीवविभुत्ववादिनैयायिकादिनये तस्यापि जीवसाधारण्यं मन्वानेन कहोळेन पुनरपि तथैव पृष्टे दुःखसामान्याभावस्यापि अन्तर्यामित्वघटकत्वमतोऽन्यदार्तमित्यनेन सूचितमप्यनेन न ज्ञातमिति तस्य स्पष्टीकरणाय 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति तदुपपादकगुणोपपादनपुरस्सरं पूर्वं सूचितमेव दुःखसामान्याभावस्य घटकत्वं पुनराविष्कृतमतोऽन्यदार्तमिति ॥

**अत्र च**—उषस्तकहोळप्रश्नोत्तरश्रुतिप्रतिपाद्ययोर्विद्ययोरैक्यं न युक्तं, एकत्र प्राणनहेतुत्वधर्मभूतज्ञानाद्वारकवृत्तित्वादीनामन्यत्राशनायाद्यतीतत्वादीनां गुणानामुपास्यत्वेन उत्पत्तिशिष्टप्राणनहेतुत्वादिविशिष्टे उपासनेऽशनायाद्यतीतत्वादीनां विधानासम्भवेन गुणाधिकरणन्यायेन विद्याभेदस्यावश्यकत्वात्——**इत्याशङ्क्य**; प्राणनहेतुत्वादीनामशनायाद्यतीतत्वादीनां च सर्वान्तरत्वान्यथानुपपत्त्या प्राप्तानां विधेयत्वायोगात् गुणाधिकरणन्यायानवतारादित्यभिप्रायेण ब्रह्मणस्सर्वान्तरत्वमेवोपास्यगुणः, प्राणनहेतुत्वादयस्तु तस्योपपादका नोपास्याः——**इति श्रीभाष्यं प्रवृत्तम्** ॥ उपास्यगुणः—उपासनांशे

विधेयभूतो गुणः, उपपादकाः—अन्यथानुपपत्तिप्राप्ताः, नोपास्याः—न विधेया इत्यर्थः ॥

**एतेन**—प्राणनहेतुत्वादीनामशनायाद्यतीतत्वादीनां चोपास्यत्वाभावे व्यतिहारो विशिंषन्तीति सूत्रविरोधः, तत्सूत्रे उषस्तेन कर्तव्यस्य प्राणनहेतुत्वानुसन्धानस्य कहोळेनापि कर्तव्यतायाः कहोळेन कर्तव्यस्याशनायाद्यतीतत्वानुसन्धानस्य उषस्तेनापि कर्तव्यतायाः प्रतिपादनात्तेषां गुणानामनुपास्यत्वे परस्परं व्यतिहृत्यानुसन्धानस्य विफलत्वात्—इति **निरस्तम्**; उदाहृतभाष्यस्य प्राणनहेतुत्वादीनां विधेयत्वाभावपरतया उपास्यत्वाभावपरत्वाभावेनाविरोधात् ॥

**ननु**—उदाहृतभाष्यस्य प्राणनहेतुत्वादीनामनुपास्यत्वपरत्वाभावे तदुत्तरश्रीभाष्यासङ्गतिः । इत्थं हि तदुत्तरं **श्रीभाष्यम्**—

> "ननु—उपास्यगुणस्सर्वान्तरात्मत्वमेव चेत्, प्राणनहेतुत्वस्याशनाद्यतीतत्वस्य च प्रष्ट्रोर्व्यतिहृत्यानुसन्धानं किमर्थं; तदुच्यते सर्वप्राणिप्राणनहेतुत्वेन सर्वान्तरात्मनि जीवाद्व्यावृत्ते ब्रह्मण्युषस्तेनावधृते सति कहोळेन जीवस्य सर्वात्मना असम्भावितस्वभावविशेषेण सर्वान्तरात्मा व्यावृत्तोऽनुसन्धेय इति कृत्वा पुनः प्रश्नः कृतः । याज्ञवल्क्योऽपि तदभिप्रायमभिज्ञाय प्रत्यगात्मनोऽसम्भावितमशनायादिप्रत्यनीकत्वमुक्तवान् । अतश्चोपास्यव्यावृत्तिप्रतीतिसिद्ध्यर्थमुभाभ्यां परस्परबुद्धिव्यतिहारः कर्तव्यः ॥" —इति ॥

अत्र—नन्वित्यादिभाष्येण प्राणनहेतुत्वादीनामनुपास्यत्वे व्यतिहारसूत्रवैयर्थ्याशङ्कनेन तत्पूर्वभाष्ये प्राणनहेतुत्वादीनामनुपास्यत्वाभ्युपगमावश्यकत्वात्—इति **चेत्** ॥ **उच्यते**—नन्वित्यादिभाष्यं हि प्राणनहेतुत्वाशनायाद्यतीतत्वयोरन्यतरेणैव सर्वान्तरत्वोपपादनसम्भवात् उभाभ्यामुभयानुसन्धानं व्यर्थमिति शङ्कापरम्; तदुच्यत इत्यादिभाष्यं

च पूर्वनिरुक्तसर्वान्तरत्वोपपादनमन्यतरेण न सम्भवतीत्युभयानुसन्धान-मुभाभ्यां कर्तव्यमिति समाधानपरमिति न विरोधः। अन्यतरस्यो-पास्यत्वाभ्युपगमेनैव नन्वित्यादिभाष्यप्रवृत्तेस्तत्पूर्वभाष्यस्य प्राणनहेतु-त्वानुपास्यत्वपरत्वानावश्यकत्वात्। तथा च टीकायामवतारितम्——

> "तत्र सर्वप्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वयोरन्यतरेणैव व्यावृ-त्तिबुद्धिस्स्यादित्यन्यतरेण किमित्यभिप्रायेण चोदयति नन्विति ॥" —इति ॥

तथा च-प्राणनहेतुत्वादीनामुपपादकानामप्युपास्यत्वमनुमतमेवेति न पूर्वोत्तरभाष्ययोर्विरोधः; न चोत्पत्तिशिष्टन्यायविरोधश्च ॥

अत्रेदं विचार्यते—उत्पत्तिशिष्टन्यायाङ्गीकारे सम्भृत्यधिकरण-विरोधः। तदधिकरणे हि तैत्तिरीयके राणायनीयानां खिलेषु च—"ब्रह्म ज्येष्ठा वीर्या सम्भृतानि, ब्रह्माग्रे ज्येष्ठं दिवमाततान, ब्रह्म भूतानां प्रथमोत जज्ञे, तेनार्हति ब्रह्मणा स्पर्धितुं कः"—इति श्रूयते॥ ज्येष्ठानि—इतरानभिभाव्यानि, वीर्याणि ब्रह्मणा सम्यग्भृतानीत्यर्थः। इदं वाक्यं न स्वरूपोपदेशपरं, सर्वव्याप्ते तस्मिन् द्युव्याप्तिकथनस्य उपासनार्थ-त्वावश्यकत्वात्; नापि सद्विद्यान्यायेन स्ववाक्य एव कल्पिते उपा-सनविधौ शेषभूतं, अनारभ्याधीतस्यास्य तत्तत्प्रकरणश्रुतोपासनार्थ-त्वेनैव निर्वाहे तत्रैवोपासनान्तरविधिकल्पनायोगात्। तथा च सम्भृ-तिद्युव्याप्त्यादिगुणानां विनिगमनाविरहेण सर्वविद्यान्वयित्वे प्राप्ते यत्र हृदयादिरूपाल्पस्थानावच्छिन्ने ब्रह्मण उपास्यत्वं तादृशशाण्डिल्य-दहरादिविद्यासु स्वर्गलोकनिष्ठात्यन्ताभावाप्रतियोगिरूपद्युव्याप्तत्वस्य अन्वयो न सम्भवति; देवताधिकरणे देवानामुपासनाधिकारसमर्थनेन उपासकहृदयावच्छिन्नब्रह्मणस्स्वर्गे सत्त्वेऽपि तादृशहृदयानवच्छिन्न-स्वर्गप्रदेशे तादृशब्रह्मात्यन्ताभावसत्त्वात्; किन्त्वल्पस्थानगोचरविद्या-

तिरिक्तविद्यास्वेव द्युव्याप्तत्वस्यान्वयात् तत्सहचरितानां सम्भृत्यादीना-मपि तत्रैवान्वयः ॥

न चैवं-द्रव्यनिष्ठापृथक्सिद्धिसम्बन्धावच्छिन्नात्यन्ताभावाप्रतियो-गित्वरूपदेशापरिच्छेदघटितस्यानन्तत्वस्य आनन्दादय इति सूत्रे सर्व-विद्यानुयायित्वेन प्रतिपादितस्यापि तादृशविद्यास्वन्वयो न स्यादिति-वाच्यम्; इष्टापत्तेः। अत एवोक्तं **श्रीभाष्ये**—

> "शाण्डिल्यदहरादिविद्यासु अल्पस्थानविषयासु ज्यायान् पृथिव्या यावान् वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्यादयस्तत्र तत्राशक्योपसंहारा मनोमयत्वापहतपाप्मत्वादि-विशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः॥"—इत्युक्तम्॥

तत्र टीका—'माहात्म्यप्रतिपादनपराः—स्वतोऽनन्तत्वरूपमाहात्म्यप्रति-पादनपरा इत्यर्थः, न त्वेतद्विद्याया उपास्याकारपरा इत्यर्थः"—इति ॥

अयं भावः—पृथिवीनिष्ठापृथक्सिद्धिसम्बन्धावच्छिन्नप्रतियोगित्वा-भावद्युनिष्ठतादृशाभावप्रतियोगित्वाभावकूटस्यैव द्रव्यनिष्ठापृथक्सिद्धि-सम्बन्धावच्छिन्नप्रतियोगित्वसामान्याभावरूपत्वात् ज्यायान् पृथिव्या इत्यादेर्विशेषाभावप्रतिपादकस्यापि निरुक्तसामान्याभावप्रतिपादकत्व-मुपपन्नम्—इति ॥

अत्र स्वतोऽनन्तत्वरूपमाहात्म्यप्रतिपादनपरा इत्यर्थ इति टीका-वाक्याच्छाण्डिल्यादिविद्यास्वनन्तत्वस्योपास्यत्वाभावोऽवगम्यते ॥

**नन्वेवं**—अव्यवहितटीकाविरोधः; तथा च टीका—

"अल्पस्थानविषयदहरादिविद्यासु द्युव्याप्त्यादेरनुपसंहारश्चेत् कथं सर्वविद्यानुयायिष्वानन्दादिष्वन्तर्भूतस्यानन्त्यस्यानुसन्धेयत्वम्? इत्थं—औपाधिकाल्पत्ववतो ब्रह्मणस्तस्मिन्नेव स्थाने औपाधिकमहत्त्वं विरुद्धमिति तदनुपसंहार उक्तः। आनन्दाद्यन्तर्भूतमानन्त्यं स्वाभा-

विकमिति न विरोधः, औपाधिकाल्पत्वानुसन्धानं स्वाभाविकमहत्त्वानुसन्धानं चाविरुद्धम्; स्वतोऽपरिच्छिन्नं ब्रह्मास्मदनुग्रहायौपाधिकाल्पत्ववत् स्थितमिति ह्यनुसन्धातुं शक्यं, अल्पत्वमहत्त्वयोरौपाधिकयोर्युगपदेकत्रान्वयो विरुद्ध इत्यर्थः"---इति ॥

तथा चोक्तटीकायामानन्त्यस्य शाण्डिल्यविद्यादिषूपास्यत्वसमर्थनात्पूर्वापरग्रन्थविरोधः---इति चेत् ॥

**अत्र भावप्रकाशिकाकृतः**---

> "कथं सर्वविद्यानुयायिषु आनन्दादिषु अन्यतमस्यानन्तत्वस्यानुसन्धेयत्वमिति ग्रन्थस्यानन्तरं केचिदूचुरिति पठित्वा इत्थमौपाधिकाल्पत्ववत इत्यादि पठितव्यम्। अतस्स्वतोऽनन्तत्वरूपमाहात्म्यप्रतिपादनपराः, न तु विद्याया उपास्याकारपरा इत्यर्थ इति न पूर्वग्रन्थविरोधः ॥" —**इति वदन्ति** ॥

**वस्तुतस्तु**---द्रव्यनिष्ठापृथक्सिद्धिसम्बन्धावच्छिन्नात्यन्ताभावप्रतियोगितापर्याप्त्यनधिकरणत्वरूपानन्तत्वस्य तदुपपादकानां पृथिवीनिष्ठतादृशसम्बन्धावच्छिन्नाभावप्रतियोगितापर्याप्त्यनधिकरणत्वद्युनिष्ठतादृशाभावप्रतियोगितापर्याप्त्यनधिकरणत्वादीनां च शाण्डिल्यदहरादिविद्यासूपास्यत्वमस्त्येव; द्रव्यनिष्ठतादृशाभावप्रतियोगित्वस्य पृथिवीनिष्ठतादृशाभावप्रतियोगित्वादीनां च हृदयावच्छिन्नविशिष्टब्रह्मणि पर्याप्तत्वेऽपि विशेष्यस्वरूपतत्पर्याप्त्यनधिकरणत्वस्याक्षतत्वात्, हृदयावच्छिन्नब्रह्मोपासनेष्वपि निरुक्तानन्तत्वादीनामुपास्यत्वाविरोधात् ॥

न चैवं--शाण्डिल्यदहरादिविद्यास्वनन्तत्वस्य ज्यायान् पृथिव्या इत्यादेश्चोपास्यत्वाभावप्रतिपादनपरयोरुदाहृतश्रीभाष्यतट्टीकयोर्विरोध इति--वाच्यम्; "ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना नोपपद्यते ते सर्वासु ब्रह्मविद्यास्वनुसन्धेया" इत्यानन्दादय इति सूत्रावतरणश्रीभाष्यानुरोधेन अनन्तत्वादीनां ब्रह्मस्वरूपानुसन्धानान्यथाऽनुपपत्तिप्राप्तत्वेन उपास्-

नांशे अनन्तत्वज्यायस्त्वादीनां न विधेयत्वमित्यर्थपरत्वादुदाहृत-श्रीभाष्यटीकयोर्विरोधाभावात् ॥

न च—पृथिव्यवधिकज्यायस्त्वादेरौपाधिकमहत्त्वरूपत्वादौपाधिकाल्पत्वमहत्त्वयोर्युगपदेकत्रानुसन्धानं न युज्यत इति—वाच्यम्; पृथिव्यादिनिष्ठापृथक्सिद्धिसम्बन्धावच्छिन्नाभावप्रतियोगितापर्याप्त्यनधिकरणत्वरूपस्य पृथिव्याद्यवधिकज्यायस्त्वस्य स्वरूपगतत्वेन स्वाभाविकतयौपाधिकत्वाभावात्; "अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च" इति सूत्रे—'एषम आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा' इत्यादिना हृदयात्मकाल्पस्थानवृत्तित्वस्य व्रीह्याद्यपेक्षया अणीयस्त्वरूपाल्पत्वस्य च व्यपदेशाच्छाण्डिल्यविद्याप्रतिपाद्यो न परमात्मा, किं तु जीव इत्याशङ्क्य, अणीयस्त्वेनोपास्यत्वप्रतिपादनार्थं हृदयावच्छेदकृतस्याणीयस्त्वस्य व्यपदेशो न त्वणीयस्त्वं स्वाभाविकमिति परिहारमभिधाय व्योमवच्चेतिसूत्रखण्डेन स्वाभाविकं महत्त्वं ज्यायान् पृथिव्या इत्यादिना प्रतिपाद्यत इत्यभिधानात्। तथा च तत्सूत्रे **श्रीभाष्यम्**—

"व्योमवच्चायं व्यपदिश्यते, स्वाभाविकमहत्त्वं चात्रैव व्यपदिश्यते ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य इति ॥" —इति ॥

अत्र **टीका**—"महत्तयावगतस्य वस्तुन उपाध्युक्तिपूर्वकमुक्तं परिमाणमौपाधिकं, असम्भावितोपाधिकं परिमाणं स्वाभाविकमिति न्याय इह विवक्षितो भवति। अत्र हि हृदयमल्पोपाधिभूतं श्रुतं न तु ज्यायस्त्वोपाधिश्श्रुतः; पृथिव्यादयस्तदुपाधय इति नाशङ्कनीयम्, ततोऽपि ज्यायस्त्वश्रवणात्; न हि ततोऽधिकपरिमाणं तदुपाधिकं भवितुमर्हति ॥" —इति ॥

न चैवं—द्युव्याप्तत्वस्य द्युनिष्ठात्यन्ताभावप्रतियोगितापर्याप्त्यनधिकरणत्वरूपस्याप्युक्तरीत्या स्वाभाविकत्वापत्त्या सर्वविद्यासूपसंहारप्रसङ्ग इति—वाच्यम्; स्वरूपगतस्य निरुक्तद्युव्याप्तत्वस्य कालानवच्छिन्नतया 'ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति श्रुत्युक्तस्याग्रकालावच्छिन्नद्युव्याप्तत्वस्य स्वाभाविकत्वायोगादौपाधिकत्वावश्यकत्वाद्दिव एव तत्रोपाधित्वात्, तत्र स्वर्गापेक्षया अधिकपरिमाणानुक्तेः। एवं च टीकाग्रन्थे केचिदूचुरित्यध्याहारो नावश्यकः; "न तु विद्याया उपास्याकारपरा" इति पूर्वटीकाग्रन्थस्य न तु विद्यांशे विधेयसमर्पका इत्यर्थकत्वेनाविरोधात्। ततश्च शाण्डिल्यविद्यायामनन्ततत्वस्य पृथिव्याद्यवधिकज्यायस्त्वस्य चोपास्यत्वं श्रीभाष्यादिसिद्धमेव। युक्तं चैतत्।

"स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः। एष म आत्माऽन्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः। एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितःप्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीतिह समाह शाण्डिल्यश्शाण्डिल्यः॥"—

इति श्रुतौ हि प्राप्तोपासनानुवादेन न मनोमयत्वादीनां विधानं; प्राप्तोपासनानुवादेनानेकगुणविधाने वाक्यभेदापत्त्या विध्यैक्यासम्भवात्;

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः॥"—

इति मीमांसकैरुक्तत्वात्, एष म आत्माऽन्तर्हृदय इति वाक्यानां

त्रिरावृत्तेस्सर्वकर्मा सर्वकाम इत्यादीनां द्विरावृत्तेश्च वैयर्थ्यात्; म इति निर्देशायोगाच्च। किं तु—अभिसम्भविताऽस्मीतीति इतिशब्देन मनोमय इत्यारभ्य अभिसम्भविताऽस्मीत्यन्तस्यानुकरणरूपताप्रतीत्या ऐक्यपरत्वात्तादृशवाक्यजन्यबोधसमानविषयकत्वरूपं वाक्यसमानविषयकत्वमेव विधेयं; ततश्चैतादृशवाक्यसमानविषयकं क्रतुं कुर्यादिति स क्रतुमित्यारभ्य अभिसम्भविताऽस्मीत्यन्तवाक्यस्यार्थः। एवं चानेकगुणविधानाभावान्न वाक्यभेदप्रसङ्गः। हृदयान्तर्वृत्तित्वावच्छिन्नविषयताश्रयस्य कर्मत्वाद्यवच्छिन्नविषयताद्वयस्य चोपासने लाभायावृत्त्युपपत्तेर्न वैयर्थ्यम्। उपासनाकारप्रदर्शनत्वाच्च म इति निर्देशोपपत्तिः; समानविषयकत्वविधानादेव मनोमयत्वादीनां सर्वेषां गुणानामुपास्यत्वसिद्ध्या पृथिव्यवधिकज्यायस्त्वादीनामप्युपास्यत्वावश्यकत्वात्। तथा च—'न तु विद्याया उपास्याकारपरा' इति टीकावाक्यं विधेयत्वप्रतिक्षेपकं, न तूपास्यत्वप्रतिक्षेपकं; ततश्च औपाधिकपरिमाणान्तरावगाहिशाण्डिल्यविद्यादिव्यतिरिक्तब्रह्मविद्यासु सम्भृत्यादीनामन्वयः—इतिसम्भृत्यधिकरणसिद्धान्तः; स चानुपपन्नः, तादृशविद्यानामप्युत्पत्तिशिष्टगुणावरुद्धतया तत्रापि सम्भृत्यादीनां विधानाङ्गीकारे उत्पत्तिशिष्टन्यायविरोधात्॥

न च--पूर्वोक्तरीत्या ब्रह्मज्येष्ठेत्यादिवाक्यस्य तत्तद्विद्याभिस्सहैकवाक्यतामङ्गीकृत्य सम्भृत्यादीनामप्युत्पत्तिशिष्टत्वाङ्गीकारेण विरोधपरिहारस्सम्भवतीति—वाच्यम्; तथा सति सर्वविद्यास्वपि सम्भृत्यादीनामन्वयापत्तेः, शाण्डिल्यादिविद्यासु हृदयौपाधिकपरिमाणेन सह द्युव्याप्तेर्विकल्पापत्तेः, विरुद्धगुणस्योत्पत्तिशिष्टत्वे विकल्पस्य न्याय्यत्वात्। अत एव शाखान्तराधिकरणे क्वचिच्छाखायामग्नीषोमीयमेकादशकपालमिति श्रूयते, अन्यत्र द्वादशकपालमिति, अतो रूपभेदादग्नीषोमीयभेद इत्याशङ्क्य; द्रव्यदेवताकालरूपबहुगुणसारूप्यात्

तदेवेदमिति प्रत्यभिज्ञाया एकवाक्यतापन्नयोश्शाखाद्वयवाक्ययोरप्यै-
काग्नीषोमीययागविधायकत्वसिद्धौ सङ्ख्याद्वयस्याप्युत्पत्तिशिष्टतया
तुल्यबलत्वाद्विकल्पो न्याय्य इति--समाहितम् । तन्न्यायेनात्रापि
विरुद्धौपाधिकपरिमाणद्वयस्याप्युत्पत्तिशिष्टस्य विकल्पाङ्गीकारापत्तिः
—इति चेत् ॥

अत्रोच्यते—सम्भवति विकल्पानापादके वाक्यार्थनिर्वाहे तदा-
पादकवाक्यार्थनिर्वाहो न युक्तः । तथा च—सर्वविद्याभिस्सहैकवाक्य-
त्वाङ्गीकारे विकल्पापत्त्या औपाधिकपरिमाणानवगाहिविद्याभिरेवैक-
वाक्यत्वमङ्गीकृत्य तादृशविद्यास्वेव सम्भृत्यादीनामन्वयो युक्तः—
—इति ॥

न च—शाखाभेदेनाम्नातयोरग्नीषोमीययोरपि भेदापत्तिः, अभेदे
विकल्पस्य दुर्वारत्वादिति--वाच्यम्; द्रव्यदेवताकालरूपप्रधानभूत-
बहुगुणसारूप्येण अग्नीषोमीयस्यैक्ये सिद्धविकल्पप्रयुक्तगौरवस्य
फलमुखत्वेनादोषत्वात् ॥

अथ—बहुगुणसाम्यस्थले विकल्पस्यादोषत्वे बृहदारण्यगतयोरादि-
त्यमण्डलस्थपुरुषविषयकव्याहृतिविद्याक्षिपुरुषव्याहृतिविद्ययोरप्यैक्या-
पत्तिः; तस्य भूरिति शिर इत्याद्युक्तस्य रूपस्य हन्तिपाप्मानं जहाति
चेति फलस्य च समानत्वात्, व्याहृतिविद्येति संज्ञैक्याच्च ॥ न च—
विद्यैक्ये स्थानद्वयस्य नामद्वयस्य चाव्यवस्थितविकल्पापत्तिः, न
त्वादित्यमण्डलावच्छेदेनाहर्नामकत्वमक्ष्यवच्छेदेनाहर्नामकत्वमिति व्य-
वस्थितविकल्प इति--वाच्यम्; तस्योपनिषदहरितीति वाक्ये तच्छ-
ब्दस्य पूर्वनिर्दिष्टस्थानविशेषविशिष्टपरामर्शितया व्याहृतिशरीरकब्रह्म-
मात्रपरामर्शित्वाभावाद्व्यवस्थिताविकल्पोपपत्तेः, अग्निहोत्रं जुहोतीत्युत्प-
न्नाग्निहोत्रहोमस्यैकस्यैव 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोति'

'सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति प्रातः' इति वचनबलात् भिन्नकाला-वच्छेदेन मन्त्रयोर्व्यवस्थितविकल्पदर्शनात् तन्न्यायेनात्रापि व्यवस्थित-विकल्पोपपत्तेः—इति चेन्न ; 'य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ' इत्युप-क्रमगतया भेदव्याप्यया द्वित्वसङ्ख्यया आदित्यपुरुषाक्षिपुरुषयो-र्भेदसिद्ध्या तद्विषयकविद्ययोरपि भेदसिद्धावुपसंहारगतफलाभेदादे-रैक्यसाधकत्वायोगात्, छान्दोग्ये 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इत्यादिना आदित्यपुरुषस्य रूपमभिधाय 'तस्यैतस्य तदेव रूपं यद-मुष्यरूपं' इत्यक्षिपुरुषे रूपातिदेशाच्च तयोर्भेदसिद्धेः; तयोरभेदे रूपस्य स्वतः प्राप्तत्वेनातिदेशायोगात् । तस्मादुपक्रम एव यत्र भेद-प्रतीतिः तत्र बहुसारूप्ये सत्यपि विद्याभेद एव युक्त इति व्याहृति-विद्याया ऐक्यमङ्गीकृत्य परेषां नाम्नोर्व्यवस्थितविकल्पेन उपसंहारोप-पादनमयुक्तमेव; अन्यथा छान्दोग्यवाजसनेयकगतयोरुद्गीथविद्ययोः परेषां मते ऐक्यस्यापत्तेः । तथा हि वाजिनां तावत्—'द्वया ह प्राजा-पत्या देवाश्चासुराश्च त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्ता-सुरान् यज्ञ उद्गीथेनात्ययाम' इत्युद्गीथेनासुरविध्वंसनं प्रतिज्ञाय उद्गीथे वागादिमनःपर्यन्तदृष्टावसुरैरभिभवमुक्त्वा 'अथ हेममासन्यं प्राणमाचुः' इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा 'भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद' इति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिता । छन्दोगानामपि 'देवासुरा ह वै यत्र संयेतिरे' इत्यारभ्य 'ते देवा उद्गीथमाजह्रुः, अनेनैनानभिहनिष्यामः' इत्युद्गीथे-नासुरपराभवं प्रतिज्ञाय तद्वदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय 'य एवायं मुख्यः प्राणस्तमुद्गीथमुपासां चक्रिरे' इत्यादिनोद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा 'यथाऽश्मानमाखणमृत्वा विध्वंसते एवं हैव स विध्वंसते य एवं विदि पापं कामयते' इति शत्रुपराभवायोद्गीथे प्राण-

ष्टिर्विहिता, तत्रोभयत्र आख्यायिकाया अविशेषात्फलस्य शत्रुपराजयरूपस्य अविशेषादुद्गीथविद्येति संज्ञैक्याच्च विद्यैक्यं दुर्वारम् ॥

**ननु**—छान्दोग्ये उद्गीथनिष्ठविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नमुखगतप्राणत्वावच्छिन्नप्रकारताशाल्युपासनरूपा उद्गीथविद्या प्रतीयते, 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इति छान्दोग्यवाक्येन तादृशोपासनबोधात्, मुख्यः—मुखे भव इत्यर्थः; समानप्रकरणे 'आसन्यं प्राणमूचुः' इति प्रयोगादासन्यमित्यस्य आस्ये भवमित्यर्थात्, उद्गीथमिति द्वितीयान्तार्थोद्गीथविशेष्यकत्वावच्छिन्नोपासने तमिति द्वितीयान्तार्थमुखगतप्राणत्वावच्छिन्नप्रकारकत्वान्वयात्। वाजसनेयके चोद्गातृनिष्ठविशेष्यतानिरूपितोक्तप्रकारताशाल्युपासनरूपा उद्गीथविद्या प्रतीयते; 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रा जेष्यन्ति' इत्यादिवाजसनेयकवाक्येन तादृशोपासनबोधनात्। यद्यप्युक्तवाक्यात् अस्मत्प्रयोजनसम्पादिका प्रार्थना विषयीभूता या उद्गीथोच्चारणानुकूलकृतिः तदाश्रयाभिन्नः प्राण इत्यर्थः प्रतीयते; उत्पूर्वकगाधातोरुद्गीथोच्चारणार्थकत्वात् आख्यातस्य कर्त्रर्थकत्वात् तदेकदेशकृतौ लोडर्थप्रार्थनाया विषयतासम्बन्धेनान्वयात्, न इति षष्ठ्यन्तार्थास्मत्प्रयोजनसम्पादकत्वस्यापि तत्रान्वयात्, त्वंपदस्य प्राणपरत्वात्; तथाऽप्युद्गीथोच्चारणकर्तृभेदस्य प्राणे बाधात् कर्त्रर्थकस्याख्यातस्य तादृशकर्तृनिष्ठोपासनीयविशेष्यतानिरूपितप्रकारताश्रये लक्षणा समाश्रयणीया। तथा च—आख्यातार्थैकदेशप्रकारतायां न इति चतुर्थ्यन्तार्थस्य लोडर्थस्य चान्वयात् अस्मत्सम्बन्धिप्रयोजनसम्पादिका प्रार्थनाविषयीभूता च या उद्गातृनिष्ठोपासनीयविशेष्यतानिरूपितप्रकारता तदाश्रयः प्राण इति बोध उक्तवाक्याज्जायते; देवप्रयोजनसम्पादकोद्गातृविशेष्यकोपासनप्रकारः प्राण इति तेभ्य

एष इति वाक्यार्थः; प्राणप्रकारकताद्दशोपासनविशेष्येणोद्गाता अस्मान् देवा जेष्यन्तीत्यसुरा विदुरिति ते विदुरित्यादिवाक्यार्थः। एवं च–विशेष्यस्य भेदाच्छान्दोग्यवाजसनेयकगतोद्गीथविद्ययोरैक्यं न सम्भवति––इति चेन्न ॥

त्वन्न उद्गायेत्यादावुपासनलाभाय लक्षणाया विद्याभेदवादिभिस्सिद्धान्तिभिरपि वक्तव्यतया ताद्दशाख्यातस्य कर्मनिष्ठविशेष्यताकोपासनप्रकारे लक्षणाङ्गीकारेणैव विद्यैक्योपपत्तौ गौरवापादकस्य विद्याभेदकल्पनस्यानुचितत्वात्। एवं च–वाजसनेयकगतविद्याया अप्युद्गीथविद्येति संज्ञोपपत्तिः, अन्यथा ताद्दशविद्याया उद्गातृविशेष्यकत्वे ताद्दशसंज्ञानुपपत्तेः। उद्गीथविशेष्यकोपासनस्य असुरपराभवहेतुत्वादेव 'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इत्युपक्रमाविरोधः; उद्गातृविशेष्यकोपासनस्य तथात्वे ताद्दशोपक्रमविरोधोऽपि दुष्परिहरः ॥

न च–उत्तरवाक्यानुरोधेन उपक्रमगतोद्गीथशब्दस्य उद्गीथकर्तरि लक्षणाङ्गीकारान्न विरोध इति–वाच्यम्; तथा सत्युपक्रमाधिकरणविरोधापत्तेः। तदधिकरणे हि–"प्रजापतिर्वा इदमग्र आसीत्, स तपोऽतप्यत, तस्मात्तेपानात् त्रयो देवा अजायन्त, अग्निर्वायुरादित्यस्ते तपोऽतप्यन्त, तेभ्यस्तेपानेभ्यस्त्रयोवेदा अजायन्त, अग्ने ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः"–इत्युपक्रम्य श्रूयते––'तस्मादुच्चैरृचा क्रियते उपांशु यजुषा उच्चैस्साम्ना"––इति ॥

अत्र संशयः। तत्र किमुच्चैष्ट्वादयो ऋगादिधर्मा उत वेदधर्मा इति; उपक्रमे वेदशब्दश्रवणात्, उपसंहारे च ऋगादिशब्दश्रवणात्। वेदशब्दस्य हि मन्त्रब्राह्मणसमुदायत्वावच्छिन्ने शक्तिः, न त्वेकैकस्मिन् मन्त्रवाक्ये ब्राह्मणवाक्ये वा; तथा सति मन्त्रादिरूपैकद्वित्रिवाक्याध्ययनेऽपि 'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्'

इति शास्त्रार्थानुष्ठानप्रसङ्गात् । पादव्यवस्थावन्मन्त्रत्वावच्छिन्ने ऋक्छब्दस्य मन्त्रत्वसमानाधिकरणगीतित्वावच्छिन्ने सामशब्दस्य ऋक्सामभिन्नमन्त्रत्वावच्छिन्ने च यजुश्शब्दस्य शक्तिः; तेषां ऋगित्यादिसूत्रत्रयेण तथा व्यवस्थापनात् ॥

अत्र—उपक्रमोपसंहारयोर्विरोधाद्द्वयोरविरोधे वर्णनीये उपसंहारस्य विधित्वेन प्रबलत्वात्तदनुरोधेनोपक्रमस्थवेदपदस्यापि तदेकदेशऋगादिमन्त्रपरत्वमिति—**पूर्वपक्षे**; उपक्रमस्यासञ्जातविरोधित्वेन प्रबलत्वादुपक्रमगतवेदपदानुसारेणोपसंहारस्थऋगादिपदानामेव ऋग्वेदादौ लक्षणेति—**सिद्धान्तितम्** । तथा च—तन्न्यायेनोपक्रमगतोद्गीथशब्दस्योपसंहारानुरोधेन कर्तरि लक्षणा न युक्ता, किं तूपक्रमानुरोधेनोपसंहारगतानामुदगायदित्याख्यातपदानामुद्गातृपदानां च कर्मलाक्षणिकत्वं युक्तम् । तदिदमभिप्रेत्य 'अन्यथात्वं शब्दात्' इत्यधिकरणपूर्वपक्षे **श्रीभाष्ये** प्रतिपादितम्—

> "अत उपक्रमविरोधाय तेभ्य एष प्राण उदगायदित्यध्यस्तप्राणभाव उद्गीथ उद्गानकर्मभूत एव पाकादिष्वोदनादिवत्सौकर्यातिशयविवक्षया कर्तृत्वेनोच्यते, अन्यथोपक्रमावगत उद्गीथशब्दः कर्तरि लाक्षणिकस्स्यात् ॥" ——इति ॥

एतेन—छान्दोग्यगतोपक्रमादिगतोद्गीथादिपदानां वाजसनेयकगतोपक्रमस्थोद्गीथशब्दस्य च कर्तरि लक्षणामङ्गीकृत्य पूर्वपक्षवर्णनं परेषामनुपादेयं; उपक्रमाधिकरणसिद्धान्तबाधितत्वात् प्रबलपूर्वपक्षस्य निरसनीयस्य सम्भवे दुर्बलस्य तस्य निरासायोगात् । प्रबलस्य पूर्वपक्षस्य निरासो हि सिद्धान्तद्रढिमार्थः, न तु मन्दस्य; तस्मिन्निरस्तेऽपि प्रबलस्य पूर्वपक्षस्योदयात् ॥

अथ—छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथावयवभूतं प्रणवं प्रस्तुत्य एतस्यैवाक्षरस्योपव्याख्यानं भवति, 'देवासुरा ह वै

यत्र संयेतिरे' इत्यारभ्य 'अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे' इत्युद्गीथावयवभूतप्रणवविशेष्यकप्राणप्रकारकोपासनस्य प्रतिपादनात्; वाजिनां तु तादृशपूर्वप्रकरणाभावेन कृत्स्नोद्गीथविशेष्यकप्राणप्रकारकोपासनस्य प्रतिपादनाद्विशेष्यभेदेन विद्याभेद इत्यस्य 'न वा प्रकरणभेदात्' इतिसूत्रे व्यवस्थापनात् विद्यैक्यापादनमयुक्तम्—
—इति चेत् ॥

**सत्यम्।** विशेष्यभेदाद्विद्याभेदोऽस्माभिः स्वीक्रियते, बहुतरसारूप्ये सत्यप्युपक्रमावगतरूपभेदस्य विद्याभेदप्रयोजकत्वात्। भवद्भिस्तु न तथा स्वीकर्तुं शक्यते, उपक्रमे रूपभेदावगमेऽपि बहुतरसारूप्ये सति विद्यैक्यस्य व्याहृतिविद्यायां भवद्भिस्स्वीकारेण तन्न्यायेनात्रापि विद्यैक्यस्य दुर्वारत्वात्; तत्रादित्याक्षिरूपस्थानभेदेन विकल्पेनाहरहन्नामकत्वोपसंहारवदत्रापि विकल्पेनोद्गीथावयवरूपप्रणवकृत्स्नोद्गीथरूपयोर्विशेष्ययोरप्युपसंहारापत्तेः। किं च—भवन्मते विकल्पं विना विद्यैक्योपपादनसम्भवस्थलेऽपि विकल्पेन विद्यैक्यमुपपाद्यते, अनिर्वाहस्थले विकल्पेन विद्यैक्योपपादनस्य पुनर्न्यायसिद्धत्वादुद्गीथविद्ययोरैक्यं दुर्वारम्। तथा हि—वाजिनां पाञ्चजनाश्रयब्रह्मविद्यायां—

> "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतं, यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः तमेवंमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतं प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनो विदुस्तेन निचिक्युः ब्रह्म पुराणमग्र्यम् ॥"—

इत्युक्तायां प्राणादिरूपपञ्चजनप्रकारिकायामन्नघटितपञ्चपदार्थप्रकारकत्वज्योतिश्शब्दार्थब्रह्मघटितपञ्चपदार्थप्रकारकत्वयोर्विकल्पः। माध्य-

न्दिनपाठगतस्यान्नस्यान्नमित्यस्य काण्वपाठेऽभावेन तत्र 'तं देवा ज्योतिषां ज्योतिः' इति द्वितीयान्तज्योतिश्शब्दनिर्दिष्टब्रह्मणा पञ्चत्वसङ्ख्यापूरणमित्यस्य 'ज्योतिषैकेषामसत्यन्ने' इतिसूत्रसिद्धत्वात्; एकेषां काण्वानां पाठे अन्ने असति ज्योतिषा द्वितीयान्तज्योतिश्शब्दनिर्दिष्टब्रह्मणा पञ्चसङ्ख्यासिद्धिरिति तत्सूत्रार्थस्य भवन्मतसिद्धत्वात्। तथा च—ब्रह्मान्नयोर्विकल्पेनोपसंहारमङ्गीकृत्य विद्यैक्योपपादनवदुद्गीथविद्ययोरप्यैक्यं दुर्वारम् ॥

इयांस्तु विशेषः—यस्मिन् पञ्च पञ्चजना इत्यत्र सर्वशाखाप्रत्ययन्यायेन काण्वपाठेऽपि माध्यन्दिनपाठसिद्धान्नस्य अन्वयेन विकल्पं विना निर्वाहसम्भवेऽपि विकल्प आश्रितः, उद्गीथविद्यायां तु विकल्पं विना निर्वाहाभावाद्विकल्प आश्रयणीय इति ॥

ननु—यस्मिन् पञ्च पञ्चजना इत्यत्र पञ्चजनपदवाच्याः क इत्याकाङ्क्षायां प्राणादयो वाक्यशेषादित्यनेन प्राणादीनामेव पञ्चजनशब्दार्थत्वं प्राणस्य प्राणमिति वाक्यशेषबलात्स्वीक्रियत इत्युक्तं; तदुपरि काण्वपाठेऽन्नाभावात् पञ्चजनशब्देन प्राणादीनां ग्रहणं न भवतीत्याशङ्क्य; तत्रान्नाभावेऽपि ब्रह्मणा सङ्ख्यापूरणसम्भवात् प्राणादीनां पञ्चजनशब्दार्थत्वमुपपन्नमिति सूत्रकृतैवोक्तत्वात् अन्नब्रह्मणोर्विकल्पस्सूत्रसिद्ध एव—इति चेन्न। भवदुक्तरीत्या सूत्रतात्पर्ये प्राणादय इति सूत्रस्यैव वैयर्थ्यापत्तेः, 'सन्दिग्धे तु वाक्यशेषात्' इति प्राथमिकाधिकरणेनैव गतार्थत्वात्। तदधिकरणे हि—अक्ताश्शर्करा उपदधातीत्यत्र अविशेषात्तैलादिसाधारणाञ्जनसाधनद्रव्यसामान्यस्य निर्णीतत्वात् तेजो वै घृतमित्यर्थवादस्योपलक्षणपरतयाऽप्युपपन्नत्वात्तेन विधिसिद्धद्रव्यसङ्कोचायोगादर्थवादस्य सन्दिग्धार्थनिर्णायकत्वं न सम्भवति—इत्याशङ्क्य; विधेरविशेषप्रवृत्तत्वेऽप्यर्थवादस्थघृतमात्रेणैवाकाङ्क्षाशान्त्या द्रव्यान्तराक्षेपकत्वे प्रमाणाभावात् विध्यर्थवाद-

योरेकवाक्यत्वेन घृतरूपैकार्थविधायकत्वोपपत्तौ अर्थवादस्योपलक्षणत्वे प्रमाणाभावात् वाक्यशेषरूपस्यार्थवादस्य सन्दिग्धार्थनिर्णायकत्वं सम्भवति–इति सिद्धान्तितम् । अत्रापि तन्न्यायेन पञ्चजनशब्दार्थ-निर्णयोपपत्तौ प्राणादय इति सूत्रस्य वैयर्थ्यप्रसङ्गात् ॥

न च–परमते पूर्वोत्तरमीमांसयोरैकग्रन्थ्यानङ्गीकारान्न वैयर्थ्यप्रसङ्ग-इति–वाच्यम्; परेषामप्यैकग्रन्थ्यस्येष्टत्वात् । अत एव 'एक आत्मनश्शरीरे भावात्' इत्यत्र शङ्करभाष्ये देहातिरिक्तात्मास्तित्वस्य शास्त्रप्रथमपादे व्यवस्थापनात् अत्र तद्व्यवस्थापनं पुनरुक्तं–इत्याशङ्क्य; शबरस्वामिना तत्र तत्कृतं न सूत्रारूढं, अतो न पौनरुक्त्यं–इति समाहितम् । ब्रह्मजिज्ञासासूत्रे भामत्यां धर्मजिज्ञासासूत्रस्थस्य धर्मपदस्य वेदार्थमात्रोपलक्षणत्वमुक्तं; अत एव तद्भाष्ये बहुस्थलेषु प्रमाणत्वेनोदाहृतायां उपवर्षवृत्तौ पूर्वतन्त्रे आत्मास्तित्वाभिधान-प्रसक्तौ शारीरके वक्ष्याम इत्युक्तम् । तस्मादैकग्रन्थ्यं परेषामप्यनुमतमेवेति वैयर्थ्यं दुष्परिहरम् ॥

सिद्धान्तिनां तु न वैयर्थ्यं प्राप्नोति । इत्थं हि सिद्धान्ते तदधिकरणं—यस्मिन् पञ्चपञ्चजना इति वाक्यं कापिलतन्त्रसिद्धतत्त्वपरमुत नेति संशयः; अत्र पूर्वः पक्षः–तद्वाक्यमब्रह्मात्मकतत्त्वप्रतिपादनपरं, ब्रह्मात्मकत्वेनागृह्यमाणतत्त्वनिष्ठपञ्चविंशतिसङ्ख्याबोधकत्वात्,

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥"—

इत्यादिसाङ्ख्यवाक्यवत्–इत्यनुमानेन तादृशश्रुतेरब्रह्मात्मकपञ्चविंशतितत्त्वपरत्वं सिध्यति ॥

न च–उक्तवाक्यस्य पञ्चविंशतिसङ्ख्याबोधकत्वमसिद्धमिति–वाच्यम्; अत्र पञ्चजनशब्दो हि न रूढ्या मनुष्यपरस्समुद्रान्तर्वृत्ति-दानवविशेषपरो वा, मनुष्याणामनन्तत्वेन दानवस्यैकत्वेन च पञ्च-सङ्ख्यान्वयासम्भवात्; किं तु पञ्चानां जनानां समाहारः पञ्चजना

इति समाहारसमासात् पञ्चत्वसमनियततत्त्वगतसमुदायत्वावच्छिन्नपरः ॥

**यद्यपि**—जनपदस्य छत्रिन्यायेन जायमानाजायमानोभयसाधारणतत्त्वपरत्वात्तत्र पञ्चसङ्ख्यान्वयात् पञ्चजनशब्देन पञ्च तत्त्वानि प्रतीयन्ते; **तथाऽपि**—समाहारस्थले उत्तरपदस्य तत्पर्याप्तसमुदायत्वावच्छिन्ने लाक्षणिकत्वाज्जनपदस्य तत्त्वपर्याप्तसमुदायत्वावच्छिन्ने लक्षणा, तदेकदेशतत्त्वे पञ्चपदार्थस्याभेदेनान्वये तद्गतसमुदायत्वेऽपि समनैयत्यसम्बन्धेन पञ्चत्वस्य तात्पर्यानुरोधेन भानात्, द्विगुसमासस्थले सर्वत्र समुदायत्वे सङ्ख्यासमनैयत्यबोधस्यावश्यकत्वात्; अन्यथा—सप्तलोकीत्यादिवत्पञ्चलोकीत्यादेरपि प्रसङ्गात्। यद्वा जनपदमेव पञ्चत्वसमनियतत्वसमुदायत्वावच्छिन्ने लाक्षणिकं, पञ्चपदं च तात्पर्यग्राहकम् ॥

न च—महाभूतानामनन्तत्वान्महाभूतादिपर्याप्तसमुदायत्वे पञ्चत्वसमनैयत्यं बाधितमिति—वाच्यम्; भूतत्वतन्मात्रत्वज्ञानेन्द्रियत्वकर्मेन्द्रियत्वावशिष्टपदार्थत्वान्यतमत्वादिना अनुगमय्य तादृशान्यतमव्याप्यप्रकृतिविभाजकोपाधित्वेन महाभूतवृत्तिधर्मपञ्चकतन्मात्रवृत्तिधर्मपञ्चकादिनाऽनुगमं कृत्वा स्वाश्रयतादृशान्यतमव्याप्यप्रकृतिविभाजकोपाधिमत्त्वसम्बन्धेन पञ्चत्वविशिष्टस्यैव प्रकृते पञ्चशब्दार्थतया भूतानामनन्तत्वेऽप्युक्तसम्बन्धेन पञ्चत्वस्य भूतसामान्ये तन्मात्रादिसामान्ये च सत्त्वेन भूतपर्याप्तसमुदायत्वतन्मात्रपर्याप्तसमुदायत्वादीनामुक्तसम्बन्धेन पञ्चत्वसमनैयत्योपपत्तेः। समासाप्रविष्टपञ्चपदार्थपञ्चत्वस्य 'द्वे शते त्रीणि शतानि' इत्यादौ पदार्थतावच्छेदकशतत्वादौ द्वित्वादेरिव निरुक्तसमुदायत्वेऽन्वयात् पञ्चत्वसमनियततत्त्वगतसमुदायत्वपञ्चकलाभादुक्तवाक्यात्पञ्चविंशतिसङ्ख्याबोधोपपत्तिरिति॥ प्राप्तेऽभिधीयते—"न सङ्ख्योपसङ्ग्रहादपि नानाभावादति-

रेकाच्च"। सङ्ख्योपसङ्ग्रहात् उक्तसङ्ख्याबोधकत्वहेतुकानुमानादपि 'यस्मिन् पञ्च पञ्च जनाः' इति वाक्यस्याब्रह्मात्मकतत्त्वप्रतिपादनपरत्वं न सिध्यति, कुतः, नानाभावात्—एषां पञ्चसङ्ख्याविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात्, 'यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः' इति; एतेषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वप्रतीतेः, 'तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति तच्छब्दनिर्दिष्टस्य ब्रह्मत्वोक्त्या तत्समानार्थकस्य यच्छब्दस्यापि ब्रह्मपरत्वावसायात्; एवं च ब्रह्मात्मकत्वेनागृह्यमाणत्वरूपसाधनविशेषणासिद्ध्या उक्तानुमाने साधनाप्रसिद्धिरित्यर्थः। अतिरेकाच्च तन्त्रसिद्धेभ्यस्तत्त्वेभ्यो[1]ऽतिरेकोऽपि भवति, यच्छब्दनिर्दिष्टस्यात्मन आकाशस्य चातिरिक्तत्वात्। एवं च—इदं वाक्यं न तन्त्रसिद्धतत्त्वप्रतिपादनपरं, सप्तविंशतितत्त्वबोधकत्वात्, 'तं षड्विंशकमित्याहुस्सप्तविंशमथापरे' इति मन्त्रोपनिषद्वाक्यवत्—इति प्रत्यनुमानमुक्तं भवति; न सङ्ख्योपसङ्ग्रहादपीत्यपिशब्देन स्वरूपासिद्धिश्च विवक्षिता, आकाशस्य पृथङ्निर्देशेन भूतगतसमुदायत्वस्याकाशातिरिक्तचतुष्टयगतस्यैव बोधावश्यकतया पञ्चत्वसमनियतसमुदायत्वपञ्चकबोधकत्वासिद्धेः। अत इदं वाक्यं न पञ्चविंशतितत्त्वपरं, किं तु ज्ञानेन्द्रियपञ्चकपरम्। न च तद्वाक्यस्य ज्ञानेन्द्रियपञ्चकपरत्वे प्रमाणाभावः; यस्मिन् पञ्च पञ्च जना इति वाक्यं ज्ञानेन्द्रियपञ्चकपरं, ज्ञानेन्द्रियत्वव्याप्यचक्षुष्ट्वादिधर्मपञ्चकबोधकवाक्यसमभिव्याहृतत्वे सति पञ्चत्वसङ्ख्याबोधकत्वात्, ज्ञानेन्द्रियाणि पञ्च चक्षुश्श्रोत्रमनोघ्राणादीनीत्यादिवाक्यवत्—इत्यनुमानेन तत्सिद्धेः। न च—प्राणस्य प्राणमिति वाक्ये प्राणान्नशब्दयोर्ज्ञानेन्द्रियत्वव्याप्यधर्मावच्छिन्नपरत्वाभावादुक्तहेतोरासिद्धिरिति—वाच्यम्; तद्वाक्ये

(१) पा तत्त्वेभ्योऽक्तत्वातिरेकोऽपि.

प्राणशब्दः प्राणाप्यायिततत्स्पर्शनेन्द्रियलाक्षणिकः, अन्नशब्दश्च स्वाप्यायितत्वस्वकर्मकादनकरणत्वान्यतरसम्बन्धेन अन्नविशिष्टत्वेन घ्राणरसनोभयलाक्षणिकः। तथा च **श्रीभाष्यम्**—

> "अन्नस्येति घ्राणरसनयोस्तन्त्रेणोपादानं, अन्नशब्दोदितपृथिवीसम्बन्धित्वात् घ्राणेन्द्रियमनेन गृह्यते। अद्यते अनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते॥" —इति॥

एवं च–घ्राणरसनोभयानुगतनिरुक्तैकधर्मस्यैव ज्ञानेन्द्रियत्वव्याप्यतया हेतुघटकत्वान्न पञ्चत्वसङ्ख्याविरोधः। यथा 'द्वादश मासाः पञ्चर्तवः' इत्यत्र ऋतुषट्के सत्यपि हेमन्तशिशिरयोरेकरूपेण निर्देशात् पञ्चत्वं 'वसन्तऋतूनां प्रीणामि' 'ग्रीष्मऋतूनां प्रीणामि' इत्यादिना सर्वानृतून् प्रत्येकं निर्दिश्य 'हेमन्तशिशिरऋतूनां प्रीणामि' इत्युभयगतसमुदायत्वेन द्वयोर्निर्देशात्तादृशसमुदायत्वमेव पञ्चर्तव इति पञ्चत्वघटकमिति प्रतीयते; तथेहापि–चक्षुश्श्रोत्रमनश्शब्दानां त्रयाणामिन्द्रियपरत्वदर्शनेन तत्प्रायपाठेन प्राणान्नशब्दयोरपि तथात्वसिद्धिः॥

न चैवमपि–काण्वपाठेऽन्नस्याभावात्तादृशधर्मपञ्चकबोधकवाक्यसमभिव्याहृतत्वासिद्धितादवस्थ्यमिति–वाच्यम्; पञ्च पञ्च जना इति वाक्यं ज्ञानेन्द्रियपञ्चकपरं, ज्ञानजनकत्वरूपज्ञानेन्द्रियसामान्यलक्षणबोधकवाक्योत्तरत्वे सति पञ्चत्वसङ्ख्याबोधकत्वात्, ज्ञानजनकानीन्द्रियाणि ज्ञानेन्द्रियाणि तानि पञ्चेति वाक्यवत्–इत्यनुमानेन काण्वपाठेऽपि तत्सिद्धेः; 'तं देवा ज्योतिषां ज्योतिः' इति ज्ञानजनकत्वात्मकज्योतिष्ट्वरूपज्ञानेन्द्रियसामान्यधर्माभिधायकवाक्यत्वगिन्द्रियत्वादिविशेषधर्मपञ्चकवाक्योभयमध्यगतस्य यस्मिन्नित्यादिवाक्यस्य ज्ञानेन्द्रियपरत्वावश्यकत्वात्, सामान्यधर्मबोधकवाक्य-

विशेषधर्मबोधकवाक्योभयमध्यगतवाक्यस्य उभयधर्माश्रयवस्तुपरत्वस्य युक्तत्वात्; गन्धवती पृथिवी नित्याऽनित्या चेति सामान्यविशेषधर्मबोधकवाक्यद्वयमध्यगते पृथिवी द्विविधेति वाक्ये तथा दर्शनात्। तत्र प्राणादय इति सूत्रं विशेषधर्मबोधकवाक्यसमभिव्याहारेण तत्साधनपरं, ज्योतिषैकेषामिति सूत्रं च सामान्यधर्मबोधकवाक्योत्तरत्वेन तत्साधनपरमिति विवेकः॥

काण्वानां पाठे अन्नाभावात्तद्घटिते यस्मिन् पञ्च पञ्च जना इतिवाक्ये ज्ञानेन्द्रियत्वव्याप्यधर्मपञ्चकबोधकवाक्यसमभिव्याहृतत्वाभावात्तद्घटितहेतुना तद्वाक्यस्य ज्ञानेन्द्रियपरत्वसाधनासम्भवेऽपि न क्षतिः; ज्योतिष्ट्वरूपसामान्यधर्मबोधकवाक्योत्तरत्वघटितहेतुनैव तद्वाक्ये तत्साधनोपपत्तेरिति ज्योतिषैकेषामिति सूत्रार्थात्। तथा च—प्राणादय इत्यादिसूत्रद्वयस्य सन्दिग्धे तु वाक्यशेषादिति सूत्रासिद्धन्यायापेक्षया विलक्षणन्यायप्रतिपादकत्वान्न तत्सूत्रवैयर्थ्यम्। एतेन प्राणादयो वाक्यशेषादिति सूत्रं कृत्वाचिन्तापरमेव, पञ्चजनशब्दस्य वाक्यशेषगतप्राणादिपरत्वासम्भवात्। तद्धि न रूढ्या, तद्ग्राहककोशाद्यभावात्; नापि योगेन, पञ्चत्वविशिष्टजनिमत्त्वरूपयोगार्थस्य घटादिसाधारण्येन तेन रूपेण ज्ञानेन्द्रियाणामेव बोध इत्यस्यासम्भवात्, पञ्चेति पदान्तरार्थस्यान्वयासम्भवाच्च, पञ्चत्वविशिष्टे तदन्वये आकाङ्क्षाभावात्; नापि लक्षणया, शक्यार्थबाधाभावात्॥

न च—पञ्चजनपदशक्यार्थानां मनुष्याणामानन्त्यात् तत्र पञ्चत्वसङ्ख्यान्वयानुपपत्त्या लक्षणाकल्पनमावश्यकमिति—वाच्यम्; पञ्चपदस्य ब्राह्मणत्वक्षत्रियत्ववैश्यत्वशूद्रत्वनिषादत्वरूपपञ्चजात्यवच्छिन्नपरत्वेन अन्वयानुपपत्त्यभावात्। मनुष्याणामुक्तपञ्चविधजातिमत्त्वं च बहुश्रुतिसिद्धम्। अथर्ववेदे हि तृतीयकाण्डे पञ्चमानुवाके

समाम्नायते—

"यस्त्वां होतारं मनसाऽभिसंविदुस्त्रयोदश भौवनाः पञ्च मानवा वर्चोधसि यशसि सूनृतावते तेभ्योऽग्निभ्यो हुतमस्तु तत् ॥" —इति ॥

अस्यार्थो वेदभाष्ये दर्शितः—अग्ने, त्वा त्वां, होतारं देवानामाह्वातारं, मनसाऽभिसंविदुः सम्यग्जानन्ति ये त्रयोदश भौवनाः—'विश्वकर्मा भौवनः स्वानि सर्वाणि भूतानि जुहुवाञ्चकार' इत्यादिश्रुत्यन्तरप्रसिद्धाः, विश्वकर्मप्रभृतयो भुवनस्य महर्षेः पुत्रास्त्रयोदश सङ्ख्याकाः; पञ्च मानवाः निषादपञ्चमाश्चत्वारो वर्णाः, गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके; तस्मिन् वर्चोधसि तेजो धारयते, यशसि यशस्विने, सूनृतावते प्रियहितवचनयुक्ताय तुभ्यं तेभ्योऽग्निभ्यश्च हुतमेतद्धविरस्त्विति ॥

एवं श्रुत्यन्तरेऽपि—'यमाय धर्म्यं वरपञ्चमानवाः' 'वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यमः'—इति । तत्रापि निषादपञ्चमाश्चत्वारो वर्णाः पञ्च मानवा इति भास्करादिभिर्व्याख्यातं, वर्णानां पञ्चत्वेन निषादग्रहणमग्निसम्बन्धात् । अत एव मन्त्रवर्णे 'जना यदग्निमयजन्त पञ्च' इति श्रूयते । तदिदमभिप्रेत्यैव शारीरकभाष्ये सूत्रानुसारेण पञ्चजनशब्दस्य प्राणादिपरत्वं वर्णितवताऽपि शङ्करेण बृहदारण्यकभाष्ये—पञ्च पञ्च जनाः गन्धर्वाः पितरो देवा असुरा रक्षांसि निषादपञ्चमा वर्णाः—इति च व्याख्यातम् । अतः प्राणादय इति सूत्रं कृत्वाचिन्तापरं; अस्मिन्नपि तन्त्रे कृत्वाचिन्तापरं सूत्रं दृश्यते—स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः—इति । तत्सूत्रे हि—मुण्डके बृहदारण्यके च श्रूयमाणाया अक्षरविद्याया ऐक्यं न सम्भवति, 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णं' इत्याथर्वणिकासाधारणशिरोव्रतस्य मुण्डकेऽक्षरविद्याङ्गत्वदर्शनेन वाजसने-

यकगताक्षरविद्यातो भेदावश्यम्भावात्—इत्याशङ्क्य; शिरोव्रतस्याध्ययनाङ्गत्वेन विद्याङ्गत्वाभावादक्षरविद्याया ऐक्ये नास्तिबाधकमिति—समाहितम्; तच्च न युक्तम्, सौरसंहितायां—

"ब्रह्मविद्योपदेशस्ययोग्यं वक्ष्यामि सुव्रत्या"

इत्युपक्रम्य—

"विधिवच्छ्रद्धया सार्धं न चीर्णं यैश्शिरोव्रतम्।
ब्रह्मविद्यामिमां तेषां न वदेत कदाचन ॥
इदं शिरोव्रतं चीर्णं विधिवद्यैर्द्विजातिभिः।
तेषामेव परां विद्यां वदेदज्ञानबाधिकाम् ॥
शिरोव्रतमिदं नाम शिरस्याथर्वणे श्रुतम्।
अग्निरित्यादिभिर्मन्त्रैष्षड्भिश्शुद्धेन भस्मना ॥
सर्वाङ्गोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयम्।"—

इति वचनेन शिरोव्रतस्याथर्वशिरश्श्रुतिप्रतिपाद्यभस्मोद्धूलनरूपत्वस्य सर्वब्रह्मविद्याङ्गत्वस्य च प्रतिपादनेन अध्ययनाङ्गत्वायोगादिति—केषांचिन्मतं निरस्तम् ॥ . कोशग्रन्थानां प्रामाण्यम् .

कोशादेः शक्तिग्रहांशे प्रामाण्यं हि न स्वतः, वेदातिरिक्तस्य शब्दस्य स्वतःप्रामाण्यायोगात्; नापि स्मृत्यादिवत् श्रुतिमूलकतया, तथा सति स्मृतिन्यायाभ्यां कोशस्य बाधायोगात्। दृश्यते हि—'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इति कोशस्य ब्रह्मशब्दस्य वेदतपसोश्शक्तिग्राहकस्य—

"वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥
यस्मिन् प्रयुज्यमाने तु गुणयोगस्सुपुष्कलः।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥"—

इति गरुडपुराणवचनेन पुरुषोत्तमादन्यत्र ब्रह्मशब्दस्यामुख्यताप्रतिपादकेन बाधः। उक्तपुराणवचनस्येव कोशस्यापि श्रुतिमूलकत्वे उभयोस्समबलत्वेन एकेनापरस्य बाधायोगात्। उक्तं च श्रीभाष्ये—'तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः'—इति ॥

न च—'अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गोअश्वानेवास्मै समीचो दधाति' इति श्रुतिवाक्यस्य पशुशब्दवाच्येष्वजादिषु अपशुत्वप्रतिपादकस्यापि न तत्परत्वं; किं तु गवाश्वप्राशस्त्यपरत्वमिति तत्सिद्धिपेटिकायां व्यवस्थापितम्; तद्वदेतदुक्तगरुडपुराणवचनमपि गुणपौष्कल्यप्रतिपादनेन विष्णुप्राशस्त्यपरं, न तु तदतिरिक्तानां ब्रह्मशब्दवाच्यत्वाभावपरमिति तेन कोशस्य बाधो न युक्त इति—वाच्यम्; सप्त ग्राम्याः पशव इति श्रुत्यन्तरविरोधाल्लौकिकव्यवहारविरोधादपशवो वा अन्ये पशव इति स्ववचनविरोधादपशुत्वविधौ प्रयोजनाभावात् वैशब्द्योपबन्धात्, समीच इति प्राशस्त्योक्तेश्च; अपशव इत्यस्य प्रशस्तपशुभिन्नार्थकत्वमभ्युपगम्यार्थवादत्वाङ्गीकारेऽपि प्रकृते तथाविधबाधकाभावेन उक्तगारुडपुराणवचनस्य ब्रह्मशब्दस्य विष्णौ मुख्यवृत्तेरन्यत्रामुख्यवृत्तेश्च प्रतिपादनेऽपि तात्पर्यावश्यकत्वात्। उक्तं च सूत्रकृता—'स्याच्चैकस्य ब्रह्मशब्दवत्' इति। ब्रह्मशब्दस्य परमात्मनि मुख्यत्वं तपसि गौणत्वं च यथा 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति' इत्यादौ स्वीक्रियते, तथा सम्भूतशब्दस्यापीति तत्सूत्रार्थस्य शङ्करेण प्रतिपादनादुक्तवचनेन कोशबाधः परेषामपीष्टः। तथा 'पीलुः काण्डे द्रुमे गजे' इति पीलुशब्दस्य गजे शक्तिप्रतिपादकस्य कोशस्य 'चरुः स्थाल्यां हविष्यपि' इति चरुशब्दस्य स्थाल्यां शक्तिप्रतिपादकस्य च कोशस्य न्यायेन बाधो दृश्यते। तेष्वदर्शनादिति पूर्वतन्त्रप्रथमाध्यायतृतीयपादस्थशास्त्रप्रसिद्ध-

पदार्थप्रामाण्याधिकरणे–पीलुशब्दस्य वृक्षविशेषे आर्याणां प्रयोगो गजे म्लेच्छानां, चरुशब्दस्य हविष्यार्याणां स्थाल्यां म्लेच्छानां प्रयोगः; तत्रोभयत्रापि तयोश्शब्दयोश्शक्तिः, आर्याणामिव म्लेच्छानामपि प्रयोगे अभियुक्तत्वादिति–पूर्वपक्षं प्रापय्य; शब्दैकसमधिगम्यधर्माधर्मयोरविप्रतिलिप्सया शब्दार्थतत्त्वविवेचनचतुराणामार्याणां व्यवहारस्य केवलदृष्टार्थप्रवृत्तम्लेच्छव्यवहारापेक्षया प्रबलत्वादार्यव्यवहारानुरोधात् पीलुशब्दस्य वृक्षविशेषे शक्तिः, गजे लक्षणया शक्तिभ्रमाद्वा प्रयोगः; तथा च–चारुशब्दस्य हविषि शक्तिः, स्थाल्यां लक्षणया शक्तिभ्रमाद्वा प्रयोग इति–व्यवस्थापितम्; एवं–पुण्डरीकं सिताम्भोजमिति कोशस्य पुण्डरीकशब्दस्य सिताम्भोजपरत्वग्राहकस्य रक्ताम्भोजपरत्वग्राहकाभ्यां न्यायश्रौतव्यवहाराभ्यां बाधः, जातिनैमित्तिकं यथास्थानमिति नवमाध्यायतृतीयपादस्थस्तरणमन्त्रोहाधिकरणे 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति विहितायामिष्टौ 'पौण्डरीकाणि बर्हींषि भवन्ति' इति स्तरणार्थत्वेन विहितेषु पुण्डरीकेषु अतिदेशतः प्राप्तस्य 'दर्भैस्तृणीत हरितैः' इति प्रकृतिगतस्य मन्त्रस्य दर्भपदस्थाने पुण्डरीकं पदं हरितपदस्थाने रक्तपदमूहितव्यमिति व्यवस्थापितत्वात् पुण्डरीकपदस्य रक्ताम्भोजपरत्वगतेः। एवं–'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी'–इति श्रौतव्यवहारोऽपि रक्ताम्भोजपरत्वग्राहकः, पाणिपादतलनखनेत्रान्ततालुजिह्वाधराणां सप्तानां रक्तत्वस्य महापुरुषलक्षणत्वेन सामुद्रिकोक्ततया पुरुषोत्तमाक्षियुगलोपमानवाचिनः पुण्डरीकपदस्य श्वेताम्भोजपरत्वायोगात्। अतः कोशस्य लोकप्रयोगमूलकतयैव प्रामाण्याल्लोकप्रयोगस्य शक्तिभ्रमादिमूलकत्वे तन्मूलकः कोशस्तदंशेऽप्रमाणमेव। श्रुतिगतवाक्यशेषस्य च स्वतः प्रमाणतया तेन जायमानश्शक्तिग्रहस्तु न केनापि

बाधमर्हतीति पञ्चजनशब्दस्य वाक्यशेषवत्वात् ज्ञानेन्द्रियशक्ति-स्सिध्यत्येव ॥

एवं च–अप्रमाणमूर्धन्येन वाक्यशेषेण मूलकृता शक्तिस्थापने दुर्बलभूतकोशाभावाच्च पञ्चजनशब्दस्य ज्ञानेन्द्रियेषु रूढिरिति वचन-मज्ञानमूलकमेव ॥

॥ श्रीरस्तु जगतां मुदे ॥



इति

श्रीशेषार्यवंशमुक्ताफलस्य श्रीयादवाद्रिनिवासरसिकस्य

श्रीमदनन्तार्यवर्यस्य कृतिषु

**विधिसुधाकरो**

यावत्सम्पादितः ॥

---

॥ श्रीः ॥

॥ श्रीः ॥

# सुदर्शनसुरद्रुमः



श्रीमन्महीशूरमहाराजाधिराजमहास्थानसभाभूषणैः
शेषार्यवंशमुक्ताफलैः श्रीयादवाद्रिनिवासरसिकैः
पण्डितमण्डलीसार्वभौमैः

**श्री ॥ उ ॥ म. अ. अनन्तार्यवर्यैः**

विरचितः ।



विद्वद्वरैः परिशोध्य



**म. अ. अनन्तार्येण**

**प्र. भ. तो. नरसिंहार्येण च**

कल्याणपुर-विचारदर्पण-मुद्राक्षरशालायामङ्कयित्वा
प्राकाश्यं नीतः ॥



१८९९.



मूल्यं रू. २—०—०

॥ श्रीः ॥

# सुदर्शनसुरद्रुमः

भव्योल्लासाय भूयाद्विनमदमरराड्दिव्यकोटीरकोटी-
रत्नाग्रप्रत्नमुक्तामणिगणविलसत्कान्तिकिञ्जल्कजुष्टम् ।
पादाब्जं श्रव्यनव्येतरफणितिसतीदिव्यसीमन्तसीमा-
सन्धार्यं श्रीपतेश्श्रीयदुशिखरिशिखारत्नदीपस्य विष्णोः ॥ १ ॥

चिरन्तनसरस्वतीचिकुरमल्लिकातल्लज-
प्रफुल्लनवमञ्जरीप्रविगलन्मधूलीझरी ।
कला कलयतां मुदं कमलनेत्रवक्षस्स्थली-
कषोपलतटीकनत्कनकरेखिका काचन ॥ २ ॥

पूर्वाचार्यपरम्परां प्रतिपदं वन्दे मुकुन्दे रतां
यस्याः प्राथमिको रमाप्रियसखो नाथादयो मध्यमाः ।
श्रीमच्छिङ्गलदेशिकस्तु चरमो येनाहमध्यापितः
शास्त्रं यत्पदसंश्रयात्प्रकथनो यद्दैवतो यत्सुतः ॥ ३ ॥

जयन्तु जगतां श्लाघ्या जराजन्मनिरासकाः ।
पुरन्दरस्य यमिनां पदपङ्कजरेणवः ॥ ४ ॥

शेषार्यवंशवार्धीन्दुरनन्ताचार्यकोविदः ।
करोति विदुषां प्रीत्यै सुदर्शनसुरद्रुमम् ॥ ५ ॥

रङ्गाचार्यमनीषिणां निवसतां गोवर्धने वर्धने
प्राज्ञानां करुणावशाद्विलसितामाज्ञां पुरस्कुर्वता ।
मन्दोदीरितफल्गुदूषणवचोनिर्मूलनेच्छावता
ग्रन्थोऽयं रचितः फलं च गमितः श्रीपार्थसूतार्पणात् ॥६॥

इह तावत्प्रत्यक्षानुमानशब्दैस्तप्तमुद्राधारणस्य धर्मत्वं व्यवस्थाप्यते ॥

तत्र तप्तमुद्राधारणस्य धर्मत्वग्राहकं प्रत्यक्षं नेन्द्रियजन्यं, तादृशस्य प्रत्यक्षस्य धर्मत्वाविषयकत्वात् । किन्त्वीश्वरयोगिप्रभृतीनां प्रत्यक्षं, अस्मदादीनामपि तप्तमुद्राधारणांशे लौकिकं धर्मत्वांशेऽलौकिकं प्रत्यक्षं च, तद्ग्राहकम् ॥

न च—तादृशालौकिकप्रत्यक्षस्य श्रुतिस्मृत्यादिजन्यशाब्दबोधगृहीतग्राहितया न प्रामाण्यसम्भवः, अज्ञाताबाधितार्थग्राहिताया एव प्रामाण्यरूपत्वादिति—वाच्यम् ; तथा सति स्मृत्यादीनामप्यप्रामाण्यापत्तेः । एवं—तप्तमुद्राधारणं धर्मः, अलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवत्—इत्यनुमानं च तद्ग्राहकम् ॥

यत्तु—तप्तचक्रादिधारणं धर्म इत्यत्र न प्रत्यक्षं प्रमाणं, धर्मस्य प्रत्यक्षागोचरत्वात्; नाप्यनुमानं, श्रुत्यनुपजीविनोऽनुमानस्य धर्मप्रमाणत्वायोगात्—इति ॥

अत्रोच्यते ॥ तप्तचक्रादिधारणविशेष्यकधर्मत्वप्रकारकप्रत्यक्षत्वावच्छेदेन प्रमात्वाभावस्साध्यते, उत प्रमात्मकप्रत्यक्षसामान्ये तद्विशेष्यकतत्प्रकारकत्वाभावः, प्रत्यक्षत्वावच्छेदेन चक्रादिधारणनिष्ठविशेष्यतानिरूपितधर्मत्वनिष्ठप्रमान्यानिरूपितप्रकारताकत्वाभावो वा ?

**नाद्यः**—तादृशप्रत्यक्षस्य भवन्मतेऽसिद्धत्वेन पक्षस्योभयवाद्यसिद्धत्वापत्तेः । भ्रमात्मकतादृशप्रत्यक्षस्य प्रसिद्धावपि न निस्तारः; तादृशप्रत्यक्षस्यापि धर्मितावच्छेदकाद्यंशे प्रमात्वसम्भवेन प्रमात्वसामान्याभावसाधने बाधात्, धर्मत्ववन्निष्ठविशेष्यतानिरूपितधर्मत्वप्रकारताकत्वाभावसाधनेऽपि तप्तमुद्राधारणं सन्ध्यावन्दनं च धर्म इति समूहालम्बनप्रत्यक्षे बाधात् । सामानाधिकरण्येन साध्यतास्वीकारे च तादृशप्रत्यक्षसामान्यस्य प्रामाण्यानिराकरणादसङ्गतिः; सामानाधिकरण्येन प्रमात्वाभावसिद्धावपि प्रत्यक्षविशेषस्य प्रामाण्यसम्भवाविरोधात्, धर्मस्य प्रत्यक्षागोचरत्वादिति हेत्वसङ्गतेश्च, तप्तचक्रादिधारणनिष्ठधर्मत्वस्य प्रमात्मकप्रत्यक्षागोचरत्वादितिहेत्वर्थत्वे च साध्याविशेषात् ॥

**न द्वितीयः**—अन्यांशे प्रमात्मकप्रत्यक्षे बाधात् तदंशे प्रमात्मकप्रत्यक्षस्य चाप्रसिद्धेः, महानसीयवह्निमति वह्न्यभावसाधनवत्तदंशे प्रमात्मकप्रत्यक्षे तद्विशेष्यकतत्प्रकारकत्वाभावसाधनासम्भवात् भ्रमान्यप्रत्यक्षत्वावच्छेदेन तत्साधनेऽप्यन्यांशे भ्रमात्मकप्रत्यक्षस्य प्रामाण्यानिराकरणादसङ्गतिः ॥

**नापि तृतीयः**—ईश्वरयोगिप्रत्यक्षादौ बाधात्, इन्द्रियजन्यप्रत्यक्षत्वावच्छेदेन तत्साधनेऽप्यन्यांशे लौकिकप्रत्यक्षमादाय बाधात् अलौकिकान्यप्रत्यक्षत्वावच्छेदेन तत्साधनेऽन्यांशेऽलौकिकप्रत्यक्षस्य प्रामाण्यानिराकरणादसङ्गतिः । तदंशे अलौकिकान्यत्वनिवेशेऽपि न निस्तारः, तदंशे लौकिकालौकिकोभयात्मकप्रत्यक्षस्य प्रामाण्यानिराकरणात् ॥

न च—ईश्वरयोगिप्रत्यक्षादेस्तप्तमुद्राधारणांशे धर्मत्वावगाहित्वस्य अस्माभिरनभ्युपगमान्न दोषः; प्रतिवादिरीत्या बाधस्य दोषत्वे अनुमानमात्रोच्छेदादिति—वाच्यम् । एवमपि साध्याप्रसिद्धेर्दुर्वार-

त्वात्, तादृशभ्रमान्यनिरूपितप्रकारताया अप्रसिद्धत्वात् ; प्रत्यक्षत्वसामानाधिकरण्येन तत्साधने च सिद्धसाधनं ; धर्मस्य प्रत्यक्षागोचरत्वादिति हेतुरप्ययुक्तः, व्यधिकरणत्वात् । धर्मत्वाविषयकत्वादिति हेतुकरणेऽपि प्रतिवादिरीत्या असिद्धिः ; तप्तमुद्राधारणगतधर्मत्वं प्रत्यक्षग्राह्यमिति वदन्तं प्रत्येवानुमानप्रयोगात् तादृशधर्मत्वस्य प्रत्यक्षग्राह्यतामनभ्युपगच्छन्तं प्रत्यनुमानप्रयोगे त्वनुमानवैफल्यात् सिषाधयिषया न्यायप्रयोगस्य चासाम्प्रदायिकत्वात् । नापीत्याद्यप्ययुक्तं ; अनुमानप्रामाण्यस्य पूर्वमुक्तत्वात्, अनुमानविशेषस्य प्रमाणत्वाभावेन तत्सामान्यस्य प्रमाणत्वाभावसाधनायोगाच्च ॥ न च—श्रुतेरभावस्य वक्ष्यमाणतया तदुपजीव्यनुमानस्यासम्भवात्, तदनुपजीव्यनुमानस्य च प्रमाणत्वायोगादनुमानसामान्यस्य तदंशेऽप्रामाण्यं युक्तमिति—वाच्यम् ; वक्ष्यमाणरीत्या श्रुतेरभावस्यासिद्धेः ॥ न च श्रुतिसद्भावेऽपि तदुपजीव्यनुमानस्यानुवादित्वादप्रामाण्यमिति वाच्यम् ; तथा सति स्मृत्यादेरप्यप्रामाण्यापत्तेः ॥ —इति ॥

एवमेव प्रत्यक्षानुमानादिपदानां कारणपरत्वेऽप्युक्तरीत्यैव दोषो बोध्य इति दिक् ॥

तत्र प्रमाणभूतशब्दस्तावत् श्रुतिस्मृतिपुराणपाञ्चरात्राणि । तत्र श्रुतिरपि पठ्यमानश्रुतिः खिलश्रुतिश्चेति द्विविधा । तत्र पठ्यमानश्रुतिः प्रथममुदाह्रियते ॥

**शतपथे तावत्—**

"अथ कात्यायनः पप्रच्छ । याज्ञवल्क्य इति होवाच— परं ब्रह्मेत्येको देवो विश्वतश्चक्षुरुत विश्वात्मा विश्वतोबाहुरुत एष पुरुषोऽन्तर्यामोऽन्तर्यामिस्स विश्वतोमुखस्सर्वात्मा विश्वतस्पादिति । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत इति । सं बाहुभ्यां नमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः । पुरुषोऽन्तर्यामोऽ

न्तर्यामः । स आदित्यतेजो भवति, स आदित्यलोको भवति, स विष्णुरेव भवति, स विष्णुलोको भवति । तप्तं चक्रं द्विभुजे धार्य-मित्यग्निहोत्रमेव लोको भवत्यूर्ध्वपुण्ड्रमालिखेत्तस्मा द्विरेखं भवति । भूःस्वयम्भूर्ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनः पप्रच्छ । याज्ञवल्क्य इति होवाच—ज्ञानं वै पुरुषो ब्रह्मणो जायते ब्राह्मणो भवति, वसिष्ठः कश्यपोऽत्रिर्जमदग्नि-र्विश्वामित्रोऽयं व्यासः पाराशर्यस्सनकादयो देवास्स ब्रह्मलोको भवति, तप्तं चक्रं द्विभुजे धार्यमिति स विष्णुलोको भवति सोऽनन्तलोको भवति स पुण्यलोको भवति स वै पुण्यो भवति य एवं वेद ॥

"अथ कात्यायनः पप्रच्छ । याज्ञवल्क्य इति होवाच—आदित्यः पुरुषस्स आदित्यः कस्मिन् प्रतिष्ठितश्चाध्यात्मं च प्रतिष्ठितं वेद प्रति तिष्ठति, प्रजया पशुभिरस्मिन् लोकेऽमृतत्वमेति पापं हरति, सुदर्शनं धार्यमित्यूर्ध्वपुण्ड्रं द्विरेखं भवति, ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनः पप्रच्छ । याज्ञवल्क्य इति होवाच—आप एव यस्यायतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणं नारायणं पुरुषं सर्वस्यात्मनः परायणं विष्णुरेव भवति तप्तं चक्रं द्विभुजे धार्यमिति ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनःपप्रच्छ । याज्ञवल्क्य इति होवाच—इदं वै तत्पुरुषस्य परायणो भवति तप्तं चक्रं द्विभुजे धार्यमिति, इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं वै भरद्वाजः, इमावेव विश्वामित्र-जमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निः । इमावेव वसिष्ठकाश्यपा वयमेव वसिष्ठोऽयं काश्यपो वामदेवोऽत्रिर्वाचा ह्यन्नमद्यते तद्यदत्ति

तस्यैतस्य सर्वस्यात्ता भवति सर्वमस्यान्नं भवति स विष्णुरेव भवति य एवं वेद ॥

"अथ कात्यायनःपप्रच्छ । याज्ञवल्क्य इति होवाच—पृच्छामि त्वा परमं तं पृथिव्याः पृच्छामि यत्र पुरुषस्य नाभिः, ब्रह्मणो जायत इति । देवासः पितरो येन विधृतेन बाहुना सुदर्शनेन प्रयतास्स्वर्गं लोकमायन् । येनाङ्किता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्त्यग्निना वै होत्रा तप्तं चक्रं द्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिखेत्तस्मात् द्विरेखं भवति पुनरागमनं न याति ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥ * ॥

"अथ कात्यायनेति होवाच—विष्णुरिन्द्रो वै देवा इन्द्रो वै नारायणान्नु जायते, किंदैवतोऽस्यां विष्णुदैवत इति, स विष्णुः कस्मिन् प्रतिष्ठित इति....रूपाणि पश्यति, कस्मिन् रूपाणि प्रतिष्ठितानीति, हृदय इति होवाच, तप्तं चक्रं द्विभुजे धार्यमिति, ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनेति होवाच—परमपुरुषो वै देवा मनो वै ब्रह्म मनोऽनन्तानन्तलोके निवसति तप्तं चक्रं द्विभुजेधार्यमिति ब्राह्मणास्तद्वहन्त्यग्निना वै होत्रा तप्तं तनुरित्यापोऽन्तरिक्षं समुद्रं गच्छन्त्यथापो देवास्समुद्रं गच्छन्ति यथाह वै देवा ब्राह्मणाः केशवं प्रति गच्छन्ति ॥

"अथ कात्यायनेति होवाच—पुरुषश्चन्द्रमस्यादित्यः कस्मिन् प्रतिष्ठित इत्यादित्यान्तःपुरुषस्य देवस्य देवनादिगुणयुक्तस्य हिरण्यगर्भोपाध्यवच्छिन्नेति ब्राह्मणा भगवन्तो यो वः कामयते मनो वै कामं मनोऽनन्ता मनो वै ब्रह्म मनो वै विष्णुरिति ब्राह्मणा धारयन्त्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥

"अथ कात्यायनेति होवाच—सर्वं तदिदं सर्वात्मनः परायणं नारायणं महाज्ञेयं विश्वात्मानं परायणमिति देवो भूत्वा देवासः पितरो विदुरित्यात्मा गुहायां निहितोऽस्य इत्यन्तर्यामो मघवन् मादयस्व स्वाहोर्वन्तरिक्षमन्वेमि स्वां कुतोऽसीति ब्रह्मणेति होवाच, तप्तं चक्रं द्विभुजे धार्यमिति, ब्रह्मणस्सायुज्यं सलोकतां जयति य एवं वेद ॥"

—इति ॥

त्रिष्वपि वेदेषु—"पवित्रं ते विततं ब्रह्मणस्पते, प्रभुर्गात्राणि पर्येषि विश्वतः, अतप्ततनूर्न तदामो अश्नुते, शृतास इद्वहन्तस्तत्समाशत ॥" — इति ॥

यजुषि काठके—"चरणं पवित्रं विततं पुराणं, येन पूतस्तरति दुष्कृतानि, तेन पवित्रेण शुद्धेन पूताः, अति पाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रम्, ज्योतिष्मद्भ्राजमानं महस्वत्, अमृतस्य धारा बहुधा दोहमानं, चरणं नो लोके सुधितां दधातु ॥"—इति ॥

ऋचि साम्नि च—"चमूषच्छ्येनश्शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् । अपामूर्मिं स च मानस्समुद्रं तुरीयं धाम महिषो विवक्ति ॥" —इति ॥

तत्र पवित्रं त इतिश्रुतेरयमर्थः ॥ ब्रह्मणः—चतुर्मुखस्य । पते—नियामक; चेष्टासामान्यप्रयोजकसङ्कल्पवत्त्वं तन्निष्ठस्वत्वनिरूपकत्वं वा तत्पतित्वं । प्रभुः—चेष्टासामान्यप्रयोजकसङ्कल्पाश्रयस्त्वं । विश्वतः—विश्वस्य, सार्वविभक्तिकस्तसिः । सर्वेषां गात्राणि पर्येषि—व्याप्नोषि, अन्तर्यामिरूपेण वर्तसे; गात्रत्वव्यापकसंयोगानुकूलव्यापाराश्रय इति यावत् । ते—व्यापकस्य तव; पवित्रं विततं—अग्निसन्तप्तस्वसंयोगजन्यकिणवत्त्वसम्बन्धेनाऽऽस्तिकजनसामान्यनिष्ठं ॥ तथा च—स्वीयान्तर्यामिरूपवत्तासम्बन्धेन गात्रत्वव्यापकस्य तव चक्रं उक्तसम्बन्धेन योगाप्रयोज्यास्तिकजनगात्रत्वव्यापकमित्यर्थः । गात्रे योगाप्रयोज्यत्वनिवेशाच्च चक्रा-

